"रममाणाश्च नाविन्दन् भववेदना"मित्यत्रोक्त आनन्दश्च निरूपित इत्यर्थः, तदर्थमेव नन्दादिनिरोधार्थमेव हरेर्बालभावः, सम्पन्ने त्विति नन्दादीनां निरोधरूपे फले सम्पन्ने सति ततस्तस्य बालभावस्य "कौमारं जहतुर्व्रजे" इत्यादिना परित्यागो वर्ण्यत इत्यर्थः॥

भूम्यामित्यत्र पतनस्य कारणमिति निमित्तकारणं प्रयोजककर्तारमन्यमप्रत्यक्षी-
लेखः। कृत्येत्यर्थः, लक्ष्यमिति लक्ष्यं पातनं, केनचित् पातितावित्यनुमानानन्तरं
१०-११-२ तत्कर्त्रनुमित्सा भवति, एते त्वेवमपि न ज्ञातवन्तः किन्तु स्वत एव पतिता-
विति ज्ञातवन्त इत्यर्थः, तत्र हेतुमाहुः ते हीति, एतादृशयोर्महतोः केनचित् पातनं न सम्भवत्यतः स्वत एव पात इत्यर्थः, अत इति पातनाज्ञानेन प्रयोजककर्त्रनुमित्साभावाद् व्याप्तिविशिष्टस्य हेतोरभावः अनिश्चय इत्यर्थः ॥ २ ॥

नन्विति उलूखलमाकर्षतो भगवतः प्रत्यक्षसिद्धत्वात् तत्र कर्तृत्वं प्रत्यक्षेणैव गृह्यतां,
लेखः। सन्देहः को येनान्यगवेषणेत्यर्थः, तत्राहेति तस्यापि कर्तृत्वेनाज्ञानमाहेत्यर्थः,
१०-११-३ उलूखलमित्यत्र अविज्ञायेति पूर्वस्यैवानुवृत्तिः, एतादृशं बालकं च कर्तृत्वेन अविज्ञाय भ्रमुरित्यन्वयः, उलूखलेन सहेति दाम्ना बद्धमिति पूर्वेणान्वयः, प्रत्यक्ष-सिद्धस्यापि तथा अस्वीकारे हेतुरुत्तरार्धेनोक्त इत्याशयेन तदाभासमाहुः भगवन्तमिति, उत्पातत्वेन दैत्यादिकृतत्वकथनाद् भगवतोन्यथासिद्धत्वकरणं, नन्वकारणकेति दृष्टकारणरहितेत्यर्थः, अयमिति पात इत्यर्थः, कार्येति काकुस्वरेण योज्यं, अत एवेति यत-स्तर्कविरुद्धं न मन्यतेऽत एवाग्रिमवाक्याच्च भ्रान्तो ज्ञेय इत्यन्वयः, तादृशाज्ञानस्येति भ्रमात्मकस्येत्यर्थः ॥ ३ ॥

उलूखलमित्यत्र भगवल्लक्षण इति भावे ल्युट् ज्ञेयः, भगवतो लक्षणं पूर्णत्वेन ज्ञानं
लेखः। येनेति विग्रहः, भक्तवश्यत्वासाधारणधर्मज्ञापको भगवत्कर्मक इत्यर्थः, "मामेव
१०-११-६ ये प्रपद्यन्ते" इत्यत्र एवकारादन्यकर्मको भगवत्कर्तृकोपि मायाकरणको बन्धो नान्येन मोच्यः किमुत भगवत्कर्मक इत्यवधारणार्थमेवकारः ॥ ६ ॥

प्रहसद्वदनो विमुमोच हेत्यस्य विवृतौ हेत्याश्चर्यं स्वबन्धनं तेन मोचितमिति
योजना। "कृपयासीत् स्वबन्धने" इति शुकवाक्ये स्वपदाद् भगवान् स्वस्वरूपात्मकेन-
१०-११-६ बन्धनेन बद्ध इति निरूपितं, ततश्च स्वरूपात्मकबन्धनान् मोचनं आश्चर्यजनकमेवातो हेत्युक्तमित्यर्थः, तदेवाहुः भगवल्लक्षणः इत्यारभ्य इदमाश्चर्यमेवेत्यन्तेन, स्वपदप्रयोगादिति "दाम्ना बद्धं स्वमात्मजं" मिति स्वपदप्रयोगात् स्वशब्दस्यात्मात्मीयोभयवाचकत्वेन प्रकृते उभयोरप्यर्थयोरुपयोगात् स्वस्वरूपमात्मजमित्यर्थे सिद्धे नन्दस्य भगवदभेद-सिद्धौ भगवता भगवतो मोचनं युक्तमेवेत्यर्थः, तदेवाहुः भगवद्भावं प्राप्त इतियुक्तिरपीति. नन्वात्मजपदं शुकेन कथं भगवत्युक्तं आत्मजपदस्य पुत्रवाचकत्वे देहजन्यत्वस्य प्रवृत्ति-

निमित्तत्वात् प्रकृते तदभावादित्याशङ्क्याहुः तेषामज्ञानं न तेषां बुद्धिदोषेणेत्यादि, तेषां नन्दादीनां हरौ यदात्मजत्वज्ञानजन्यं पुरुषोत्तमत्वाज्ञानं तत् तु न तेषां बुद्धि-दोषेण किन्तु लीलार्थं भगवतैव कार्यत इतिभगवल्लीलारूपत्वात् तेषां व्रजवासिनां बुद्धिमादायात्मजपदं शुकेनोक्तमतो न दोष इतिभावः ॥ ६ ॥

लेखः । १०-११-७ गोपीभिः स्तोभित इत्यत्र विद्योपजीविनामिति भगवदीयनृत्यगानविद्यां उप-जीवन्ति तदाशया तद्भावनया वा जीवन्ति ते विद्योपजीविनस्तेषां सेवा येन चरित्रेण भवेत् सिध्येत् तच् चकार, स्वस्वगृहं नीत्वेतिकथनात् तेषां तादृश एव समये सेवावसरात्, अतस्तच्चरित्रं प्रथमश्लोकार्थ इत्यर्थात्, येन सुखं भवेत् तच् चकार, अतस्तच् चरित्रं द्वितीयश्लोकार्थः, चकारादयमेव तृतीयस्याप्यर्थः, स्तोभा-क्षराणीति निरर्थकाक्षराणीत्यर्थः, यद्यपि छान्दोग्ये हाऊकारादयस्त्रयोदश स्तोभा उक्तास्तत्र लोकादिदृष्टिरुक्ता तथापि तद्दृष्ट्योपासनमात्रं न तु स शब्दार्थ इतिज्ञेयं, अलौकिकलड्-प्रयोगेण नृत्येप्यलौकिकत्वं ज्ञाप्यते इत्याशयेनाहुः तत्रापीति, तदनुचितमिति अलौ-किकनृत्यस्य फलं स्वरूपानन्दः यथा रासे तावदधिकाररहितानां स्थाने तेन नृत्येन किं फलं सिध्यत्यतोनुचितमित्यर्थः, षड्गुणैश्वर्येति यदा गुणपुरस्कारेण लीलां चिकीर्षति तदा तादृशः, अन्यथा लौकिकप्रकारेण नृत्यं कर्तुं नार्हत्यतो गुणस्वभावादेव तथेत्यर्थः, तर्हीति गुणपुरस्कारे तु विचार्यैव कार्यं करोतीति सुतरामनधिकारिस्थाने तन् नार्हतीत्यर्थः, बालभावमिति बालो ह्यविचार्य करोति, तद्भावस्यापि स्वीकारात् तावदंशे तथेतिभावः॥७॥

योजना । १०-११-७ गोपीभिः स्तोभित इत्यत्र विद्योपजीविनामित्यादि परोक्षवादेन ये केचन व्रज-भक्ता भगवन्नृत्यगीतादिरूपविद्योपजीविनस्तत्रासक्ता इतियावत्, ते विद्योपजीविनस्तेषां सेवा तत्कर्तृका सेवेत्यर्थः, सा सेवा येनोपायेन भवेत् तादृगुपायरूपां राजसादिलीलां चकारेत्यर्थः ॥ ७ ॥

कारिकार्थः । १०-११-७ गोपीभिः स्तोभितो नृत्यन्नित्यत्र विद्योपजीविनामित्यादि का० ११०½ । भग-वदीयनृत्यगानविद्यामुपजीवन्ति तदाशया तद्भावनया वा जीवन्ति ते विद्योपजीविनस्तेषां सेवा येन चरित्रेण भवेत् तत् चरित्रं चकारेति प्रथमश्लोकार्थः, येन सुखं भवेत् तच् चकारेतिद्वितीयश्लोकार्थः, चकारादयमेव तृतीय-श्लोकार्थः, राजसीमिति श्लोकत्रयोक्तानां लीलानां क्रमेण राजसतामससात्त्विकत्वं चित्र-क्षामेदेन बोध्यं, गानं राजसं पीठकादिधारणं तामसं अन्यत् सात्त्विकम् ॥११०½॥

लेखः । १०-११-९-१० दर्शयन्नित्यत्र मूले हर्षमुवाह सम्पादयामासेत्यर्थ इत्याशयेनाहुः हर्षयामासेति, हर्षं सम्पादयामासेत्यर्थः, इदमेव विवृण्वन्ति व्रज इत्यारभ्योवाहेत्यन्तेन, हर्षो भवतीति आश्लेषादिविषयको भावो हर्षस्तत्रासक्तिरितियावत्,

भवति, तथा इष्टरूपं चेष्टाश्च कटाक्षादिरूपाः करोतीतिशेषः, वहनाशक्ताविति विषय-सम्पादनाशक्त्या तादृशहर्षसम्पादनाशक्तावित्यर्थः, हर्षमिति तं हर्षमुवाह सम्पादयामास विषयसम्पादनेनेतिशेषः, आश्लेषादिना तत्प्रकारयुक्तस्वरूपविषयिणीमासक्तिं सम्पादितवानित्यर्थः, तदपीति आसक्तिसम्पादनमपि स्वरूपस्य विषयत्वसम्पादनेन न, किन्तु बालचेष्टितरूपव्यापारपुरस्कारात् करणत्वसम्पादनेनेत्यर्थः, बालचेष्टितैरिति व्यापारे तृतीयेतिज्ञेयं, चेष्टितानां व्यापारत्वात् यत्र चेष्टितानपेक्षा तत्र स्वरूपस्य हेतुत्वमात्रं न तु करणत्वं व्यापारवत्त्वाभावादितिभावः, फलपर्यवसायिन्य इति शृङ्गाररसानुभाविका इत्यर्थः, तत् कथमिति तत् तस्मात् फलपर्यवसानाभावे तज्जन्यजनकत्वाभावेन बालचेष्टितानां व्यापारत्वाभावात् तद्वत्त्वेन स्वरूपस्योक्ता तादृशहर्षे करणता कथं सम्भवतीत्यर्थः, यावतेति भगवत्त्वाद् बालचेष्टितानामपि फलपर्यवसायित्वमित्यर्थः, प्राकृतानामिति अनिवृत्ताध्यात्मिकाविद्यानामित्यर्थः, अत्रेति सर्वसमक्ष इत्यर्थः, वैकुण्ठमिति अन्तरङ्गलीलायोग्यं रहःस्थलमित्यर्थः, वश्यताबोधनं प्रयोजनं ज्ञेयं, तद्वशस्तावत्प्रतीक्षया स्थातुमशक्त इतिभावः, कारिकासु निवारणमिति अथेतिपदेन सुमुहूर्ताद्यपेक्षाभावज्ञापनेन कालापेक्षाया निवारणं नवमश्लोकार्थ इत्यर्थः, रतिस्तत्रेति सर्वेषामितिशेषः, हरेः परा रतिरन्तिमश्लोकार्थः॥९॥ गोपवृद्धा इत्यत्र पूर्वमिति बृहद् ब्रह्मरूपं वनमतस्तत्र नोत्पात इत्यर्थः॥१०॥

गोपवृद्धा इत्यारभ्य "राममाधवयोर्नृपे"त्यन्तं षोडशश्लोकानां सङ्ख्यातात्पर्यमाहुः योजनां। एवं कलाभिर्भगवान् पूर्णो वृन्दावने बभावित्यनेन, षोडशकला-
१०–११–१० युक्तो भगवान् पूर्णः श्रीवृन्दावने बभौ, श्रीवृन्दावनचन्द्रनामा सर्वोत्कर्षेण शोभते इतिफलितम् ॥ १० ॥

गोपवृद्धा इत्यादीनां षोडशश्लोकानां क्रमेण वाक्यार्थानाहुरुद्यम इत्यादि का० कारिकार्थः। १११३। आद्येन गमनोद्यमः,"तत्रोपनन्दनामाहे"त्यत्र मुख्यमन्त्री
१०–११–१० सम्पत्तिः, मन्त्रस्य मुख्यमङ्गं मन्त्री स चोपनन्दः, "उत्थातव्यमितोऽस्माभि"रित्यनेन मन्त्रः, ततस्त्रिभिर्हेतुः,"यावदौत्पातिकोरिष्ट"इत्यनेन निर्धारितश्चासौ परित्यागश्चेति निर्धारितपरित्यागः,"वनं वृन्दावनं नाम पशव्य"मित्यनेन स्थानान्तरगुणाः,"तत् तत्राद्यैव यासाम"इति नवमश्लोकार्थमाहुः कृष्णाज्ञयेत्यादि का० ११२१। कृष्णाज्ञयैव वृन्दावनगमनमित्यथेतिपदेन सुमुहूर्ताद्यपेक्षाभावज्ञापकेन कालापेक्षाया निवारणमित्यर्थः, पञ्चभिरिति "तच्छ्रुत्वैकधिय" इत्यादिभिः पञ्चभिर्गमनं, ततः"वृन्दावनं सम्प्रविश्ये"त्येकेन तत्र वासः, स च गमनं चैवेति चकारेण सूचित इति प्रतिभाति, "वृन्दावनं गोवर्धन"मिति षोडशश्लोकेन तत्र वृन्दावने हरेः परा रतिः, एवमिति का० ११२३। एवं षोडशकलाभिः पूर्णो भगवान् वृन्दावने बभाविति सङ्ख्यातात्पर्यम्।

तत्रेत्यत्र असाधारणनिरोध इति नन्दगोपसुतमात्रविषयकः सर्वात्मभाव-
लेखः। वतीष्वन्तरङ्गलीलाजनित इत्यर्थः, साधारण इति सर्वभक्तसाधारण
१०-११-११-१२ इत्यर्थः ॥११॥ उत्थातव्यमित्यत्र विरोधे एवेति प्रामाण्यमादर-
णीयमित्यर्थः ॥ १२ ॥

प्रियकृद्रामकृष्णयोरित्यस्य विवृतौ प्राधान्यप्रतिपत्त्यर्थमित्यादि मन्त्रोपदेष्टुरुप-
योजना। नन्दस्य प्राधान्यप्रतिपत्त्यर्थं मुख्यत्वसिद्ध्यर्थमित्यर्थः, द्वयोरिति
१०-११-११-१२ रामकृष्णयोरित्यर्थः, यद्यपि श्रीकृष्ण एव नन्दपुत्रस्तथापि वृद्धाः स्व-
सम्बन्धिनं स्वसुहृत्सम्बन्धिनं च तुल्यतया गणयन्तीति वसुदेवपुत्रो रामो नन्दपुत्रः श्रीकृष्णश्च
साम्येन व्यवह्रियत इति रामकृष्णयोः प्रियकृदित्युक्तं, तथा च उपनन्दे प्राधान्यं वृद्धत्वं
सिद्धमित्यर्थः ॥११॥ गोकुलस्य हितैषिभिरित्यत्र अतो विरोध एव तयोरिति यत्र
साधने कृतेपि विरुद्धं फलमुत्पद्यते तत्रैव तयोः कालकर्मणोर्भिन्नं प्रामाण्यं कालेना-
न्यथाकृतं कर्मणान्यथाकृतमित्युद्घोषदर्शनात्, अत्र तु साधनानामेव मुख्यत्वमिति गोकु-
लस्य हितैषिभिः कालकर्मविचारमकृत्वा लौकिकन्यायेनैवोपायकरणे बृहद्वनादुत्थातव्य-
मिति मन्त्रदातुर्हार्दम् ॥ १२ ॥

आयान्त्यत्र महोत्पाता इत्यत्र महोत्पातलक्षणमाहुर्लौकिक इति का० ११४½।
कारिकार्थः। यत्र यस्मिन् महोत्पाते सति तत् महोत्पाताधिकरणीभूतं स्थानं
१०–११–१२ त्यागयोग्यं भवतीत्यर्थः॥११४½॥

मुक्तः कथञ्चिदित्यत्र अत एवेति उत्पातत्वेन प्रतीकारसहितत्वादेवेत्यर्थः॥१३॥
लेखः। चक्रवातेनेत्यत्र सरस्वतीतिपक्षे विपदमित्यत्र व्यत्ययेन प्रथमार्थे
१०-११-१३-१६ द्वितीया, वियदित्यत्र तृतीयाया लुक्॥१४॥ यन्न नेत्यत्र प्राकृतानां-
मिति मूढानामित्यर्थः ॥ १५ ॥ भगवत इति एकवारमच्युतस्य भगवतो वारत्रयं
देवानामेवं वारचतुष्टयमित्यर्थः ॥ १६ ॥

यावदौत्पातिकोरिष्ट इत्यत्र बालानां कर्मतेति "तावद् बालानुपादाय" इत्युपा-
योजना। दानकर्मता बालानामित्यर्थः, यद्यपि सर्वपदार्थानामुपादानकर्मता तथापि
१०–११–१६ बालानां मुख्यत्वमिति तथा ॥ १६ ॥

वनं वृन्दावनमित्यत्र स्त्रीप्राधान्यादिति दैत्यानां स्त्रीरूपाया मुख्यत्वात् तत्स्थाने
लेखः। ते नायान्तीत्यर्थः, तर्हि शत्रुस्त्रीस्थानत्वाद् देवा एव उपद्रवं कुर्युरित्याशङ्क्य
१०–११–१७ देवानामप्यनुरोधमाहुः भगवतेति, यतः पशव्य इति देव इत्यर्थः.
अरण्यपात्रा इति पृथुसम्पादितदोहे पशूनामरण्यं पात्रमुक्तं, गोपीगोपेत्यस्याभावे अति-
गुप्तेति अन्तरङ्गलीलाज्ञानाभावेपि स्त्रीणां निःसङ्कोचेन यथासुखं विनिरतिगुप्त एव सम्य-

वतीत्येवमुक्तं, मन्त्रे स्त्रीरक्षाया मुख्यत्वेन गोपीनामभ्यर्हितत्वात् पूर्वनिपातः, अत इति पशव्यत्वात् तामसानां गोप्यादिसेव्यत्वाद् राजसानां पुण्याद्यादियुक्तत्वात् सात्त्विकानां हितकारीत्यर्थः ॥ १७ ॥

वनं वृन्दावनं नामेत्यत्र अरण्यपात्रा इति चतुर्थस्कन्धे पृथुकर्तृकपृथ्वीदोहप्रसङ्गे
योजना। पशूनामरण्यपात्रता निरूपिता, त्रिविधा भूमिरित्यादि तत्रातिगुप्ता निकु-
१०-११-१७ ञ्जादिरूपा गोपीनां सेव्या भगवता सह लीलानामभिलषितत्वात् अतिप्रकटा गोपानां तृणादिगह्वरा गवां सेव्येति सर्वेषां व्रजस्थानां हितं वृन्दावनमित्यर्थः॥

गोप्य इत्यत्र वयःसाधनेति भगवद्भोग्या वयआदय उक्ता इत्यर्थः, गोपीपदेन
लेखः। पुंयोगयोग्यत्वात् तारुण्यं निरूपितं, तस्यान्यभोग्यत्वमाशङ्क्याहुर्भगवत
१०-११-२२ एवेति, केवलं निरोधपरेति पूतनामारणादिलीलेत्यर्थः, एतासामेवेति यशोदारोहिण्योस्तु शकटो वक्ष्यते इत्येवकारः, एतासां तथाधिक्ये हेतुमाहुर्भगवांस्त्विति, एतासामेव हृदयेषु प्रतिष्ठितः स्थिरः सन् गच्छति, यशोदाक्रोडादिषु गच्छत्यागच्छति च न तु स्थिर इति तुशब्दः, अत एतासामेव रथ उक्त इतिभावः ॥ २२ ॥

गोप्यो रूढरथा इत्यस्याभासे भिन्नतयैव निर्गता इति शृङ्गाररसोपयोगिसम्पत्त्या
योजना। निर्गता इत्यर्थः, अत एव न शकटारोहणं किन्तु रथारोहणं, वयःसा-
१०-११-२२ धनशोभाभोग्या उक्ता इति वयःसाधनशोभा भगवदेकभोग्या उक्ता इतिज्ञेयं, कुचकुङ्कुमकान्तय इतिपदत्रयेण क्रमेण वयःसाधनशोभा भगवदेकभोग्या उक्ता इतिज्ञेयं, कृष्णपदेनेति "स्त्रीभावो गूढः पुष्टिमार्गे तत्त्वमिति कृष्णपदार्थ" इत्यग्रे वक्ष्यमाणत्वात् स्त्रीभावयुक्तो भगवान् कृष्णपदवाच्यः, स च रसाधिक्यवत्त्वादानन्दमय इति एतल्लीलाया अप्यानन्दमयत्वमितिभावः, निरोधपरायां लीलायां तु माहात्म्यांशोऽप्यस्तीति तदपेक्षयेयं लीलोत्कृष्टेत्यर्थः, भगवांस्तु तास्वेवेति वयःसाधनशोभानां कुचकुङ्कुमकान्तय इतिपदेनोक्तत्वात् तत्सार्थक्याय भगवान् तासां निकटे एव तिष्ठतीतिज्ञेयं, अन्यथा वयआदीनामुक्तिर्व्यर्था स्यात्, बाल्यभावे हि सर्वेषां निर्दोषबुद्धिरिति न किञ्चिद् बाधकम् ॥ २२ ॥

तथा यशोदारोहिण्यावित्यस्य विवृतौ यशोदाक्रोडे स्थित इति बालकृष्णो
योजना। हि बालस्वभावात् कदाचिद् यशोदाक्रोडे कदाचिद् गोपिकानिकटे
१०-११-२३ तद्द्वयेषु तिष्ठति तत्रापि गोपिकानिकटेऽधिकं तिष्ठतीति बोध्यम् ॥२३॥

वृन्दावनमित्यत्र नन्दस्थानं चेति नन्दग्रामोऽपि गोवर्धनसमीप एवेत्यर्थः, तदा
लेखः। वरमान्यादयोऽपि तत्रैवेतिज्ञेयं, तत्तदधिष्ठातृदेवतेति व्यापि वैकुण्ठरूप-
१०-११-२४ ममाधिदैविकस्थानमहिता इत्यर्थः, येष्टनेति शकटा एव गृहरूपा इत्यर्थः,

गृहाणामिति अन्तरङ्गलीलार्थं तादृशनिकुञ्जेषु शीतादिनिवारकमन्दिरनिर्माणमित्यर्थः।२४।

अविदूर इत्यत्र अत्रापीति बृहद्वनेपि "गोपीभिः स्तोभित" इत्यादिना त्रिविधा
लेखः। क्रीडोक्तेत्यपिशब्दः, सूक्ष्मगोपालानामिति बालकानामित्यर्थः
१०-११-२७-२९ ॥२७॥ उभयोरिति वत्सगोपालयोरित्यर्थः, अतस्तयोरेव दोषनिवृत्ति-
रुक्तेतिभावः ॥ २८ ॥ अनुकृत्येत्यत्र जीवास्त्विति प्रमाणनिष्ठाः स्वरूपमात्रनिष्ठाश्चेति-
द्वैविध्यम् ॥ २९ ॥

तं वत्सरूपिणमित्यत्र प्रदर्शितत्वादेवेति भगवद्भावनायाः सतीत्वात् सोपि
लेखः। स्वस्य दैत्यत्वं भावयामास, आविश्चकारेति मनसैवेति ज्ञेयं, अवाच्य-
१०-११-३१ तामिति अदृश्यत्वमित्यर्थः, भगवत्कृत्येति भावनया मनसैव दैत्यत्वं
भावितवान्, कृत्या तु बहिरपि दैत्यत्वं प्रकटयेदित्यर्थः ॥ ३१ ॥

दर्शयन् बलदेवायेत्यस्य विवृतौ वाच्यतानिराकरणायेति बलदेवाय वत्सासुर-
योजना। निष्ठमासुरत्वं प्रदर्शितमित्यासुरत्वज्ञानात् न निन्दा भवेदिति हार्दं, बल-
१०-११-३१ देवाय प्रदर्शनं तु बलदेवस्य वेदरूपत्वात् तत्सम्मतिग्रहणार्थं, वत्सासुरस्य
वत्सदोषरूपत्वं यदुक्तं तत् तु कृष्णोपनिषत्सु "लोभक्रोधादयो दैत्या" इत्यत्र श्रुतौ आदि-
पदोपादानाद् भगवद्द्वेष्याणां दैत्यानां दोषरूपत्वं यथासम्भवं ग्राह्यमिति वत्सदोषरूपता
निरूपिता वत्सासुरस्य ॥ ३१ ॥

लेखः। देवाश्चेत्यत्र वत्सेष्विति "द्वया ह प्राजापत्या" इतिन्यायेनोभयविधत्वं
१०-११-३४ स्थितमिदानीमासुरभावस्य निवर्तितत्वात् केवलदेवत्वं सम्पन्नमित्यर्थः॥३४॥

स्वं स्वं वत्सकुलं सर्वं इत्यत्र नवानां श्लोकानां वाक्यार्थानाहुर्यमुना जलेत्यादि
कारिकार्थः। का० ११५½। प्रथमश्लोके जलपानं द्वितीये दैत्यदर्शनं, तदेवाहुरत्र
१०-११-३६ इति का० ११६½, ११७½। भगवता सह स्थितानां गोपानां तोषो "मुक्तं
बकास्या"दितिश्लोकार्थः, गोकुलस्थानां तोषः "श्रुत्वा तद्विस्मिता गोपा" इति नवम-
श्लोकार्थः, तोष इतिपदमुभयत्र सम्बध्यते, नवश्लोकसङ्घाततात्पर्यं नव प्राणा हि
शोधिता इति, गोकुलस्थानामिति च पदमुभयत्रान्वेति ॥११७½॥

स वै बक इत्यत्र सेवेतीति असुरोपास्यो मायारूपो भगवाननेन बकाकृतिरुपास्यत
लेखः। इत्यर्थः, 'लोभो दुःखधर्मद्विषोद्भेदरूप' इतिनिबन्धे विवृतं, दुःखं चानन्दा-
१०-११-३८ भावः, अतो लोभरूपाभावसामग्र्या बलिष्ठायाः प्रतियोगितिरोधायकत्वं
युक्तमितिविमर्शेनाहुः आनन्दो हीति ॥ ३८ ॥

तं तालुमूलं प्रदहन्नित्यत्राभासे सरस्वतीस्थान इति कण्ठदेश इत्यर्थः,

१ [illegible]

योजना। कण्ठदेशस्य सरस्वतीस्थानत्वात् वेदानां प्रामाण्यार्थमिति पितरं जग-
१०-११-४० द्गुरोरित्यस्य विवृतौ तत्रासम्भावनयेति "तत्त्वमसी"त्यत्र जीवस्य भगवदभेदः प्रतिपादितः, स च सर्वज्ञेन सहाल्पज्ञस्य न सम्भवतीत्यसम्भावनया लोको न मन्यते, तस्या असम्भावनायाः निवृत्त्यर्थं विरुद्धधर्माश्रयत्वं भगवता लोके प्रदर्शितं गोपालसूनुत्वजगद्गुरुपितृत्वप्रदर्शनेन, तदेतदाहुः तस्येति, "तत्त्वमसी"त्यत्र सर्वज्ञाल्पज्ञयोरभेदो निरूपितस्तस्याभेदस्येत्यर्थः, तदेतन्निदर्शनार्थं भगवता कृतमिति निदर्शनार्थं भगवता एतत् कृतमित्यन्वयः, विरुद्धधर्माश्रयत्वबोधनार्थं गोपालसूनुत्वजगद्गुरुपितृत्वरूपधर्मनिदर्शनं कृतमित्यर्थः, एवं सति सर्वज्ञाज्ञयोरभेदे गोपालसूनुत्वजगद्गुरुपितृत्वरूपधर्मस्य निदर्शनत्वमितिबोध्यं, यथा गोपालसूनुत्वेपि जगद्गुरुपितृत्वं तथा जीवत्वेपि ब्रह्मत्वमिति निदर्शनं ज्ञेयम् ॥ ४० ॥

तमापतन्तमित्यत्र दुःखदूरीकर्त्रेति दुःखधर्मस्य द्वेषस्योच्छेदात् लोभेन ग्रासेपि स्वयं
लेखः। तन्मूलस्य दुःखस्यैव दूरीकर्तृत्वेन ततोपि समर्थः, प्रतियोगिनोऽभावात्
१०-११-४१ पलिष्ठत्वादित्यर्थः, ननु मारणे इति दम्भो निवर्तनीयः, यत्राकृतिसाम्यात् दम्भो निविष्टस्तस्य दैत्यस्यापि निवारणे इत्यर्थः, केचिदिति वरस्यैव विवरणं बकहन्तेति, पूर्वं विधेयं पश्चादुद्देश्यमुक्तं, तत्पक्षे उदरपर्यन्तं प्रवेशः स्यात्, अत्र तु तालुपर्यन्तमेव प्रवेश उक्तः, अतो न भागवतकल्पीयं तदित्यर्थः ॥ ४१ ॥

पश्यत्सु बालेषु ददारेत्यस्य विवृतौ बालानामेव दोष इति "लोभक्रोधादयो
योजना। दैत्या" इतिकृष्णोपनिषद्वचो ये ये कृष्णावतारे दैत्या हतास्ते सर्वे लोभ-
१०-११-४१ क्रोधादिरूपास्तत्र बकासुरो बालानां दम्भात्मकदोषरूप इतिज्ञेयम् ॥४१॥

मुक्तमित्यत्र दुर्निमित्तापगम इति दुष्टं प्रतिबन्धनिमित्तं प्रतिबन्धकं तदपगमे
लेखः। इत्यर्थः, प्रतिबन्धं निवर्त्य स्वयमेव मुक्तत्वकथनेन साधनासाध्यत्वं प्रति-
१०-११-४३ बन्धकाभावमात्रसाध्यत्वं च सूचितं, तादृशे दुर्लभत्वज्ञानेनात्यमीप्सितत्वमनुभवसिद्धं, न ते रामादय इति तथा च तादृशमुपलभ्य रामादयो जाताः पूर्वं तु यथा प्राणं विनेन्द्रियो गणस्तादृशास्ते इत्यन्वयः ॥ ४३ ॥

श्रुत्वेत्यत्र इयं बुद्धिरिति अमर्यादबुद्धिरित्यर्थः, तस्या आरोपितत्वे तन्निवृत्तौ
लेखः। नेत्रयोस्तृप्तिः स्यादित्यर्थः ॥४४॥ अहो इत्यत्र कृतपूर्वमिति पूर्वं कृतं
१०-११-४४-४५ कृतपूर्वमिति समासः॥४५॥ अथापीत्यत्र अन्यथेति यत्र कुत्रचिदपि भयाकर्तरि प्रयत्नकरणेन नाश इत्यर्थः, तस्मादिति यद्यपि न शक्नुवन्ति तथापि प्रयत्नमात्रान् नश्यन्तीतिपूर्वानुसन्धानेनान्वयः, अभिप्रायार्थमपीति उत्तरार्धं विचार्यतात्पर्यव्याख्यानं, तत्रेति साधारणधर्मसहितो दृष्टान्तो द्वितीयार्धार्थः अभिप्रायेति हननमभि-

प्रायविषयः, आसादनं प्रयत्नस्तद्विरुद्धं फलं स्वनाश इत्यर्थः, दृष्टान्ताभिप्रायं विवृण्वन्ति ते हीति ॥४६॥

अहो इत्यत्र असत्या न भवन्तीति फलाजनिका न भवन्तीत्यर्थः, तत्र
लेखः । हेतुरिति विधायकवाक्यत्वे हेतुर्भगवत्त्वमित्यर्थः, यत् तदिति पञ्च-
१०-११-४७-४८ म्यन्तमव्ययत्वेन व्याख्यातं, तत्र हेतुर्वेदवादिन इति, जैमिनीया इत्यर्थः, व्यासस्य तु "फलमत उपपत्ते"रित्यत्रोक्त एव सिद्धान्त इति ज्ञेयं, नन्दस्य प्रामाणिकत्वात् सात्त्विकज्ञानस्य वाक्यार्थत्वात् प्रकरणस्य प्रमाणत्वाच् च प्रमाणरीत्यैव व्याख्यानं, प्रमेयमार्गे भगवानेव सर्वसाधक इति ज्ञेयम् ॥४७॥ इतीत्यस्याभासे उपसंहरतीति इतिशब्देनोपसंहारोऽप्युक्त इति ज्ञेयं, व्याख्याने, जातब्रह्मात्मानुभवा इति "ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधन"मितिप्रकारो जात इतिभावः, तदासक्तिश्चेति मूले रममाणा इत्यस्य रतियुक्ता इत्यर्थमभिप्रेत्येदमुक्तम् ॥४८॥

एवमित्यस्याभासे क्रोडीकृता इति भगवत्सङ्गताः कृता इत्यर्थः, तादृशं कौमारं
लेखः । वयो दृष्ट्वा कौतुकेन तत्र सङ्गता इतिभावः, प्रयोजने इति कौमार-
१०-११-४९ कर्तव्ये निरोधे इत्यर्थः, एवमित्यत्र विजातीयानामिति कालमात्रसम्बन्धिलीलाकथने कौमारविजातीयानां पौगण्डादिलीलानामित्यर्थः, अरणेरिति कार्यस्य कारणनिवर्तकत्वं कथमित्याशङ्क्य दृष्टान्तेन बोधनार्थमिदमुक्तं, कौमारं जहतुरिति व्रजे कौमारवयःस्थापनकथनेन भगवतः पौगण्डादिभावेपि तासां तादृग्वयस्कत्वमिव सूक्ष्ममेव रूपं सर्वजनीनं, "परिधाय स्ववासांसी"ति वक्ष्यमाणप्रकारकरसाकरत्वानन्तरमपीति ज्ञेयं, मूलरूपलीला विवृण्वन्ति भगवानिति, परमानन्दो भूत्वेति सृष्ट्यारम्भे सच्चिदंशौ पृथक्कृत्येत्यर्थः, वृक्षादित्यादि क्षितिदेशो वृक्षः शाखास्ताः फलं तत्स्थो रसः, प्रतिवृक्षं गत्वा तत्तच्छाखाफलं भुङ्क्ते, एकस्मिन् वृक्षे एकस्यामेव शाखायां स्थित्वा शाखान्तरावयवरसमपि भुङ्क्ते, इदं द्वयं मर्कटोत्प्लवनं, एकस्यां शाखायां स्थित्वा तन्निष्ठमेव फलं तत्तदवयवभेदेन बहुविधं भुङ्क्ते तन् मण्डूकप्लवनं ज्ञेयं, एकस्मिन्नेव वृक्षे स्थित्वा तत्रत्यासु सर्वशाखासूत्प्लुत्योत्प्लुत्य तत् तत् फलं भुङ्क्ते इति वा, मण्डूको हि दूरोत्प्लवनासमर्थ एकस्मिन्नेव देशे तत्तदंशभेदेनोत्प्लवति ।

एवंविहारैः कौमारैरित्यस्याभासे येन भक्तेन कालेनेति कौमारलीलासाधकेन
योजना । आधिदैविककालेनेत्यर्थः, क्रोडीकृता इति कौमारलीलामात्रासक्ता
१०-११-४९ इत्यर्थः, तं कालमिति आधिदैविकं कौमारलीलाकालमित्यर्थः, सिद्धे प्रयोजने इति निरोधात्मकप्रयोजने सिद्धे इत्यर्थः, अत एव कृष्णरामकथां कुर्वाणानां

१. कौमारलीलामात्रासक्तभगवता निरोधरूपे प्रयोजने ।

भववेदनाज्ञानाभावः पूर्वश्लोके निरूपितः, त्यक्तवानिति स्थापितवानित्यर्थः, "स्वसैन्यं स बहिस्त्यक्त्वा जगाम गहनं वन"मित्यादौ बहिःस्थापनस्य त्यागपदार्थत्वात्, तथा च कौमारलीलातत्परिकरसहितं कालं स्थापितवानितिफलितं, कौमारस्य लीलायाः तत्परिकरस्य तदधिकरणस्य कालस्य च नित्यत्वात्, उपलब्ध्यनुपलब्धी तु आविर्भावतिरोभावसाध्ये इति बोद्धव्यं, **कौमारैरि**त्यस्याभासे **ननु विजातीयानां कथं कौमारनिवर्तकत्वं** इति नन्वियं शङ्कैव नोदेति सर्वत्र पार्थिवानां काष्ठपटादीनां तेजोरूपेणाग्निना नाशदर्शनात् विजातीयेषु नाशकत्वस्य दृष्टत्वात्, सत्यं, अन्यत्र विजातीयानां नाशकत्वेपि पलनिमेष-घटिकादिरूपे काले तत्परिच्छेद्ये वयसि च विजातीयस्य नाशकस्य अदृष्टत्वात् शङ्काया अवकाश इतिध्येयं, **निलायनैरि**त्यस्य व्याख्याने, **सर्वैरेव विहारैर्व्रज एव कौमारं** जहतुरिति इह प्रभोर्व्रजस्थितत्वेन व्रजपदोपादानं विना व्रजस्य कौमारत्यागाधिकरणत्वे सिद्धेपि व्रजपदोपादानेन व्रज एव कौमारत्यागो न त्वन्यत्र इति ज्ञाप्यते, त्यागस्त्वत्र स्थापनं न तु स्वसत्तानिवृत्तिः, "स्वसैन्यं स बहिर्हित्वा जगाम गहनं वन"मित्यादौ हित्वेत्यनेन स्थापनमेवोच्यते, अतोत्रापि स्थापनं ग्राह्यं "कौमारं जहतु"रित्यनेन, तथा च व्रजे कौमारं स्थापितमिति फलति, कौमारशब्देन कुमारस्य भावः कुमार्याश्च भावो ग्राह्यः, तद्धितप्रत्ययेन उभयथापि कौमारशब्दसिद्धेः, एवं पुम्भावस्त्रीभावविशिष्टं उभयमपि कौमारं व्रजे स्थापित-मित्याशयेनाचार्यचरणा आहुः **अतो व्रज एव कुमारो जातः कुमारी चेति,** भगवान् **व्रज एव कुमारो जातः कुमारी च जात** इत्यन्वयः, कुमाररूपेण कुमारीरूपेण च व्रजे प्रकट इत्यर्थः, "स आत्मानं द्वेधाऽपातयत् ततः पतिश्च पत्नी चाभवता"मितिश्रुतेः भगवत एवोभयभावेनाविर्भावात् प्रभोः कुमारीरूपत्वमप्यविरुद्धं, तथा चाधिदैविककुमारी-रूपो भगवान् जात इति यावत्यो व्रजे कुमार्यस्ता सर्वा अपि कुमारीरूपस्य भगवत एव स्वरूपभूता इत्याहुः **अतोग्रे वक्तव्याः कुमार्यः कृष्णचेतस इतीति,** "एवं मासव्रतं चेरुः कुमार्यः कृष्णचेतस" इत्येकोनविंशाध्याये वक्तव्याः, कुमार्योप्याधिदैविककुमारी-रूपस्य भगवतः स्वरूपभूता इत्यर्थः, एवं सति कौमारशब्दस्य कुमारीभाववाचकत्वपक्षः 'निलायनैः सेतुबन्धैः मर्कटोत्प्लवनादिभि'रित्यनेन (कौमारैरित्यस्याभासे ननु विजाती-यानां कथं कौमारनिवर्तकत्वमिति नन्वियं शङ्कैव नोदेति सर्वत्र पार्थिवानां काष्ठवस्त्रा-दीनां तेजोरूपेण वह्निना नाशदर्शनादिति चेत् न, अन्यत्र विजातीयानां नाशकत्वेपि बाल्यकौमाराद्यवस्थानां स्वसजातीयावस्थान्तरकनाशत्वेन शङ्कायाः सम्भवात् पदकुमारीभाव-वाचकत्वपक्षे 'निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभि'रित्यनेन) उक्तानां निलायनादिक्रीडानां कुमारीरूपेपि अवश्यवाच्यत्वेन तासां क्रीडानां तत्र योजने प्रकारमाहुः **करिष्यन्ति च**

१ एतच्चिह्नमध्यस्थं पाठः [illegible] ।

लीलां लतागृहादिषु लीना इत्यादिना, अयमर्थः, ताः कुमार्यः भगवता सह रमणे रसविशेषोत्पत्त्यर्थं वियोगे च तद्गात्मकतया कुञ्जेषु निलीय क्रीडां करिष्यन्ति, अतो निलायनं तास्वपि सिद्धं, भगवद्वशीकरणप्रयत्ना इति रसमर्यादया भगवद्वशीकरणार्थं भगवदनुकूलभूषणवसनचेष्टादिकं ता रचयन्तीदमेव सेतुबन्धनं ज्ञेयं, गृहस्थमर्यादोल्लङ्घनकर्त्र्यश्चेति, मर्कटोत्प्लवनमेतत् मर्कटवदुत्प्लवनं लोकवेदोल्लङ्घनं, तदपि प्रभुकृते ताभिः कृतमिति लीलात्रयं तास्वपि सिध्यति, एवं निलायनादिविहारैः सह व्रजे उभयविधकुमारस्थापनोक्तेस्तादृग्विहारविशिष्टकुमाररूपेण स्वभोग्यकुमारीरूपेण च भगवान् व्रजे सर्वदा विजयतेऽतो नित्यत्वं लीलातत्परिकरविशिष्टस्वरूपस्येतिमञ्जुलमखिलं, निलायनक्रीडाया आशयं निरूपयन्ति स हि परमानन्द इत्यादिना, अनवतीर्णं मूलरूपं ब्रह्म मायाजवनिकया यथा छन्नं भूत्वा अन्यस्य स्वविषयकं ज्ञानं रुणद्धि "न चक्षुषा गृह्यत" इतिश्रुतेः तथा अवतीर्णं मूलरूपं श्रीकृष्णाख्यं ब्रह्मापि निलीय तिष्ठतीति चक्षुरग्राह्यं भवति, सर्वशाखाफलभोगार्थं एकस्यामप्यारूढः सर्वफलं भुङ्क्ते इति, अयं च मर्कटोत्प्लवनादिकं यदुक्तं तस्याभिप्रायः, आदिशब्देन शाखान्तरस्थितिसामायिकशाखान्तरफलभोग उक्तः, मर्कटो यथा शाखायामेकस्यामारूढः अन्यासां बह्वीनां शाखानां फलं बलात्कारेण गृहीत्वा भुङ्क्ते तथा भगवानपीत्यर्थः, इह परोक्षवादेन शाखाशब्देन व्रजवरनितम्बिन्य उक्ताः, तथा च एकस्या घोपसीमन्तिन्या गृहादिषु स्थित्वा बह्वीभिर्व्रजमृगदृग्भिः सह रमते इति सूचितं, आदिशब्देन मण्डूकप्लुत्यादिकमपीति, अत्रापि परोक्षवादः, तथा च मण्डूको यथा मध्ये द्विपत्प्रदेशं त्यक्त्वा कुत्रचिदुत्प्लवनं करोत्येवं प्रभुरपि कस्याश्चिद्गृहे रमणं विधाय काश्चिन् मध्ये त्यक्त्वा कस्याश्चिद्गृहे रमते इति सूचितं, तथा सति मध्ये यां त्यक्त्वा गतः सा अन्यस्मिन् दिवसे खण्डिताभावं प्राप्नोतीति रसे चमत्कारविशेषः सिध्यति, एतावता शृङ्गाररससम्बन्धिनीरनेकविधा लीलाः प्रभुः कुर्वन् शुद्धपुष्टिभक्तानां लोचनयुगलं शिशिरयतीति निरूपितं, तामसानां प्रमाणप्रकरणस्य समाप्तौ "रसो वै सः" इति श्रुतिप्रमाणसिद्धं रसात्मकं ब्रह्म श्रीशुकेन गूढतया वर्णितं, तदेव शुकहार्दविदा भगवता सुबोधिनीकारेण परोक्षवादरीत्या प्रदर्शितमिति रसिकवैष्णवा विदां कुर्वन्तु (आदिशब्देन मण्डूकप्लुत्यादिकमपीति, मण्डूको यथा कुत्रचित् स्थितः कश्चित् प्रदेशं त्यक्त्वा कुत्रचित् प्रदेशे प्लवति, एवं कृष्णोऽपि कस्याश्चिद् गृहे स्थितः काश्चिद् वञ्चयित्वा कयाचिद् रमते, तथा च यस्या वर्जनं सा प्रातः खण्डिता भवतीति मण्डूकप्लुतिः, एवं बहुधा रमणं शुकेन गुप्तरीत्या प्रदर्शितमिति रसिकवैष्णवा विदांकुर्वन्तु), ब्राह्मणोऽपि भवति क्षत्रियोऽपि भवतीति ब्राह्मणशब्दो वामनावतारपरः "जटिलं वामनं विप्रं मायामाणवकं हरि"-

---

एवंविधमत्रो एव यत्रे।

मित्यादिषु विप्रत्वोक्तेः स वामनो यथा स्वरूपनिलायनं कृत्वा सूक्ष्मरूपं प्रदर्शयित्वा स्वकार्यं बलिराजात् साधयित्वा पश्चात् बृहद्रूपं प्रकटीचकार एवमिहापि गूढदुर्लभव्रजवधूप्राप्त्यर्थं स्वस्वरूपनिलायनं विधाय रमणाभिलापं साधयित्वा पुनः पूर्वभावं सम्पादयतीति ब्राह्मणोपि भवतीत्यनेन 'निलायनै'रित्यस्य हार्दं स्फुटीकृतं, क्षत्रियशब्देन श्रीरामचन्द्रः, स यथा सेतुबन्धेनोपायेन जानकीं प्राप्तवान्, तथेहापि रसशास्त्रोक्तचातुर्यरूपसेतुबन्धेन व्रजसुन्दरीः प्राप्नोतीति 'सेतुबन्धै'रित्यस्याशयः, किञ्च सेतुबन्धशब्देन नानाप्रकारयुक्ता राजनीतिरुच्यते, श्रीरामो यथा राजनीत्यानेकराज्यसम्बन्धिफलानि बुभुजे तथा भगवानपि रसशास्त्रोक्तचातुर्यरूपनीत्या विविधगोपवधूटीविलासफलानि भुङ्क्ते इति 'सेतुबन्धै'रित्यस्य तात्पर्यं, इह ब्राह्मणोपि भवति क्षत्रियोपि भवतीत्यस्य आधिदैविकपक्षसिद्धा रसिकभगवदीयमनोहरा निगूढा अर्थास्तु सुबोधिनीहार्दविदा भगवता श्रीविठ्ठलेश्वरेण टिप्पण्यां स्फुटीकृता इति भाग्यवद्भिस्तत एवावधार्याः ॥ ४९ ॥

"जानीत परमं तत्त्व"मितिश्लोकेन वर्णितः । परब्रह्मस्वरूपः श्रीबालकृष्णो मुदेस्तु मे ॥१॥

## इति एकादशोध्यायः।

## प्रक्षिप्ताध्यायाः १—३ ।

योजना। श्रीगोवर्धनधारी करोतु कुशलानि । अतः परमग्रेघासुरवधवत्सहरणब्रह्मस्तुतिनिरूपकास्त्रयोध्यायाः केनचित् प्रक्षिप्ता सन्ति न तु वेदव्यासविरचिताः, अतः श्रीभागवतबहिर्भूता इति सुबोधिन्यां साधितं, अध्यायत्रयस्य प्रक्षिप्तत्वे प्रमाणानि बहून्येव टिप्पण्यामुपन्यस्तानि, तानि पुनर्न लिख्यन्ते किन्त्वेतेध्यायाः प्रक्षिप्ता इतिश्रीधरस्वामिभिरप्युक्तं तदुपपाद्यते, तथा हि "द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखा" इति गणना श्रीधर्यां कृता, ततश्च द्वात्रिंशदधिकत्रिशतमध्यायाः श्रीभागवतस्येत्येतदध्यायत्रयस्य प्रक्षिप्तत्वमेवाभिप्रेतं स्वामिनामपि, त्रयाणां शतानां समाहारस्त्रिशतं, पात्राद्यन्तस्य नेतिनिषेधात् न स्त्रीत्वं पात्रादिराकृतिगण इतितत्त्वबोधिन्यामुक्तं, द्वात्रिंशच्च त्रिशतं च द्वात्रिंशत्त्रिशतं सङ्ख्याया अल्पीयस्यः इत्यनुशासनेन द्वात्रिंशत्शब्दस्य पूर्वनिपातः, केचित् तु द्वात्रिंशच्च त्रयश्च शतानि चेतिविग्रहस्य शतानि चेतिबहुवचनेन शतत्रयमेव ग्राह्यं प्रसिद्धत्वादित्याहुः, तन्न, प्रसिद्धियशाच्छतत्रयलाभे तु प्रसिद्धेरेव पञ्चत्रिंशद्ग्रामसिद्धौ सङ्ख्याकरणस्यैव वैयर्थ्यापातात्, सङ्ख्याकरणं हि शिष्यबोधाय, तत्र शिष्याणां शतत्रयसङ्ख्याज्ञाने प्रसिद्धिपरतन्त्रत्वं चेत् तदा गणना व्यर्थैव स्यात्, द्वात्रिंशच्च त्रयश्च शतानि चेतिविग्रहे सङ्ख्याया अल्पीयस्या इतिवाक्यात् त्रिद्वात्रिंशत्शतमितिरूपं स्यात्, अपरं च गणनाकृतिर्हि बोधसौकर्याय, तत् तु द्वात्रिंशच्च

त्रिशतं चेति विग्रहे भवति, द्वात्रिंशच्च त्रयश्च शतानि चेतिविग्रहे त्वत्यन्तं दौर्लभ्यं बोधस्येत्येतादृशी क्लिष्टगणना श्रीधरैः कथं क्रियेत, तस्मात् द्वात्रिंशत् त्रिशतं चेत्येव विग्रहः, ततश्चैतेध्यायाः श्रीधरमतेपि प्रक्षिप्ता इतिदिक्, माध्वैस्त्वेतेध्यायाः श्रीभागवतपुस्तकेपि प्रायो न लिख्यन्त इत्यलं विस्तरेण ।

कारिकार्थः। प्रक्षिप्ताध्यायेषु प्रथमाध्याये प्रक्षिप्तत्वं समर्थयितुं मतान्तरमाहुः कथामात्रमित्यादि का० ११८½–¾। क्वचित् पद्मपुराणादौ प्रसिद्धां, एवं मतान्तरमनूद्य दूषयन्ति शब्दार्थेति ११९½ । सङ्गतिविरोधस्तु सुबोधिन्यां टिप्पण्यां विशेषतः श्रीगोपेश्वरैश्च उपपादितः, विजयध्वजनाम्ना माध्वेनापि स्वीकृतः श्रीभागवतविवरण एतदध्यायत्रयं न व्याख्यातं, एवं प्रक्षिप्तत्वे सत्यप्येतद्व्याख्याने प्रयोजनमाहुः लोकेति का० ११९¾। तत्र प्रथमाध्यायार्थमाहुः तत्रेति का० १२०½। स्वयुक्तित इति "पीनाहिभोगोत्थित"मितिश्लोकोक्ताघासुरस्य मुक्ति"र्नैतद्विचित्र"मित्यादिश्लोकद्वयेन युक्त्या समर्थितेत्यर्थः

द्वितीयाध्याये द्वितीय इति का० १२१½ । बालैः सह वत्सहरणम् ।

तृतीयेध्याये स्तुतिरिति का० १२२½ । स्नेहोपपत्तिरिति "ब्रह्मन् परोद्भवे कृष्ण इयान् प्रेमा कथं भवे"दित्यादिना राजप्रश्ने "सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभ"इत्युत्तरेण भगवति व्रजस्थानां स्नेहोपपत्तिरित्यर्थः, "एवत् सुहृद्भिश्चरितं मुरारे"रित्यनेन श्रवणस्य फलं च। नौमीड्य ते इत्यत्र लौकिके इति का० १२३½। ननु "गुञ्जावतंसपरिपिच्छलसन्मुखाये"त्याद्युक्तप्रकारेण लौकिकव्यवहारविषय एव भगवान् किमर्थं प्रार्थ्यते श्रुतिसिद्धमेव रूपं कुतो न प्रार्थ्यत इत्याशङ्क्याहुर्लौकिके इति, लौकिके लोकप्रसिद्धे प्राकृते गुञ्जावतंसेत्याद्युक्तप्रकारेण प्राकृतसदृशे भावे यस्य भावः स एव भक्तिमान्,तं प्राकृत भावं हीनं विदित्वा योन्यथा वेद स अधम इत्यर्थः,किञ्च यद् गृह्णातीति का० १२४½। अयं भगवान् लोके यत् यादृशं रूपं गृह्णाति यथैव बोधयति येन प्रकारेणानुभावयति तदेवास्माकं प्रमाणं, इहेति भक्तिमार्गे इत्यर्थः, नान्यदिति जगत्कर्तृत्वव्यापकत्वादिविशिष्टं वेदप्रसिद्धं रूपं नास्माकं फलत्वेन प्रार्थनीयमित्यर्थः, तत्र हेतुर्भिन्नाधिकारत इति, भक्तभिन्नाधिकारत्वादित्यर्थः, तादृशे वेदप्रसिद्धे रूपे ज्ञानमार्गीयाणामेवाधिकारो न तु भक्तानामित्यर्थः, एतदेवोक्तमेतद्व्याख्याने सुबोधिन्यां "नास्माकं फलं शब्दविषयं ब्रह्म किन्त्वेतदेव प्रत्यक्षतो दृश्यं, तदपि प्राकृतचक्षुषैव, तत्रापि सर्वाभरणभूषितं, तत्रापि प्राकृतालङ्कारसहितं, तत्राप्येतदवस्थापन्न"मिति । इति प्रक्षिप्ताध्यायाः १–३ ।

इति तामसप्रकरणे प्रमाणप्रकरणम् ॥

१ ग्रहृतश्रीमद्भागवतविवरणे इत्यपि पाठः ।

## अथ तामसप्रकरणे प्रमेयप्रकरणम्।

## द्वादशोध्यायः।

द्वादशेऽध्याये यशोदानन्दयोरिति प्रसङ्गात् सर्वेपामेव निरूपितस्तथाप्येतयोः सुष्ठु
लेखः। मुख्यतया निरूपित इत्यर्थः, आध्यात्मिकीमिति स्थूलदेहाद्यध्यास-
१०-१२-० रूपाधिभौतिकी लिङ्गदेहाद्यध्यासरूपाध्यात्मिकी अलौकिकदेहाद्यध्यास-
रूपाधिदैविकी, इयं तु भगवत्सेवोपयोगित्वान् न निवर्तनीयेति भावः, उभयेपामिति निरोधार्थमितिशेपः, देहाध्यासो हीति धेनुकपदस्य देहाध्यासवाचकत्वं योगरूढ्यो-रभावेपि कल्पनया टिप्पण्यां व्याख्यातं, परोक्षवादस्थले कल्पनाया अपि प्रवृत्तिनिमित्तत्वं "कल्पनोपदेशाच्च" ति सूत्रे व्यवस्थापितं, धेनुकमारणं देहाध्यासनिवारणं चैकपदवाच्यत्वादैक्येनैव भगवता सम्पादितमितिभावः, ज्ञानपूर्वं इति अत्र ज्ञानपदेन तत्त्वादिस्वरूपज्ञानं दशरसानुभवश्चेति टिप्पण्यामुक्तं, यद्यपि बलभद्रं प्रति बोधयति तथापि प्रसङ्गादन्येपामपि श्रवणमिति ज्ञेयं, ततश्चेदिति ल्यब्लोपे पञ्चमी, तं मरणं प्राप्य पुनर्जीविता इत्यर्थः।

द्वादशाध्यायविवृतौ पञ्चधैवानुभावोत्रेति अविद्यायाः पञ्च पर्वाणि देहेन्द्रियप्राणा-
योजना। न्तःकरणाध्यासाः स्वरूपविस्मृतिरूपश्चेति तन्निवारको भगवदनुभावोत्र
१०-१२-० निरूपित इत्यर्थः, दुष्टनिग्रहरूपवानिति देहाद्यध्यासाः स्वरूपविस्मृति-
संज्ञकश्चेति पञ्च पर्वाणि यानि निरूपितानि तान्यत्र धेनुकादयो दैत्या मूर्तिमन्तः "लोभक्रोधादयो दैत्या" इति कृष्णोपनिपद्रूप्यः, तन्निग्रहरूपवान् भगवदनुभाव इत्यर्थः, आध्यात्मिकीमविद्यां वा इति एतानि पञ्च पर्वाणि निवर्तितानीत्यनेनाध्यात्मिकी अविद्यैव निवर्तिता, भौतिकी तु पूतना पूर्वं नाशिता, आधिदैविकी तु लीलोपयोगिदेहाद्यध्यासरूपा तादृग्लीलोपयोगिस्वरूपाज्ञानरूपा चेति सा न निवर्तनीयेतिभावः, ततः सर्वविनाशः स्यादिति विपरूपविपयसम्बन्धात् सर्वपारमार्थिकहानिः स्यादित्यर्थः।

द्वादशेध्याये यशोदेति का० १२५$\frac{3}{4}$। प्रसङ्गात् सर्वेपामेव निरोधः पूर्वप्रकरणे निरू-
कारिकार्थः। पितः, तथाप्येतयोः सुष्ठु मुख्यतया निरूपित इत्यर्थः, अत्रास्मिन्
१०-१२-० प्रकरणे सस्त्रीकाणां गोपालानां निरोधो मुख्यतयोच्यत इत्यर्थः, नन्वत्र
प्रमेयप्रकरण एव मुख्यनिरोधसिद्धावग्रिमप्रकरणवैयर्थ्यमित्याशङ्क्याहुर्मध्यम इति का० १२६$\frac{1}{4}$। यद्यपि वयस्यानां स्वामिनीनां च पूर्वप्रकरणोक्तनिरोधापेक्षयास्मिन् प्रकरण अधिको निरोध उच्यते तथापि वक्ष्यमाणनिरोधमपेक्ष्य एतत्प्रकरणोक्तो निरोधो गोपालानां स्वामिनीनां च द्वयोरपि मध्यम एवेत्यर्थः, पञ्चधेति का० १२६$\frac{3}{4}$। धेनुककालियप्रथमदावाग्निप्रलम्बद्वितीयदावाग्निनिग्रहात्मकः पञ्चधा भगवदनुभावोत्र प्रकरणे निरूप्यत इत्यर्थः, एते पञ्च देहेन्द्रियप्राणान्तःकरणाध्यासस्वरूपविस्मृतिरूपाः पञ्चभिरध्यायै-

निरूप्यन्ते,तत्र प्रथमो दावाग्निः प्राणाध्यासरूपः, प्रलम्बः अन्तःकरणाध्यासः,द्वितीयदावाग्निः स्वरूपविस्मरणात्मक इति तत्र तत्र स्फुटं,आध्यात्मिकीमित्यादि का० १२७ ३/४। लिङ्गशरीराद्यध्यासरूपामविद्यां दूरीकर्तुमविद्यापर्वरूपधेनुकादिवधकरणं, आधिभौतिक्यविद्या पूतनारूपा पूर्वं नाशिता, आधिदैविकी तु लीलासाधकत्वान् न निवर्तनीयेतिभावः, तदर्थं धेनुकादिवधार्थं क्रमतः पञ्चाध्यायाः, उभयेषां वयस्यानां स्वामिनीनां च निरोधार्थं क्रमेण सप्तदशाष्टादशात्मकमध्यायद्वयमित्यर्थः, उभयेषां निरोधस्य पृथङ्निरूपणे निमित्तमाहुः स्नेहाधिक्येति का० १२८ १/२। साधारणापेक्षया अधिकस्नेहज्ञापनार्थं पृथङ्निरूपणमित्यर्थः, एतत्प्रकरणीयनिरोधस्य मध्यमत्वोक्तौ हेतुमाहुः स्नेहान्त इति, स्नेह एवान्तः फलं यस्य तादृशो निरोधो मध्यम इत्यर्थः, अत्र स्नेहपदेनासक्तिर्ज्ञेया स्नेहान्तनिरोधस्य प्रमाणप्रकरण एव सिद्धत्वात्, व्यसनसिद्धिश्च साधनप्रकरणे, तथा चोक्तं दशमस्कन्धनिबन्धे "सर्वतस्त्वधिकः स्नेहः पूर्वत्र विनिरूपितः आसक्तिस्तुद्वितीये हि तृतीये व्यसनं मतं फलप्राप्तिश्चतुर्थे हि सिद्धो रोधश्चतुर्विध"इति,अध्यायार्थमाहुः प्रथममिति का० १२९ १/४। अत्र ज्ञानपदेन लीलासम्बन्धितत्त्वादिस्वरूपज्ञानं दशरसात्मकलीलानुभवश्चेति टिप्पण्यामुक्तं, फलं चात्र विषाम्भःपानेन परेतानाममृतवर्षिण्या ईक्षया पुनर्जीवनसम्पन्नया ज्ञानपूर्णलौकिकदेहप्राप्तिः, फलावधीति नपुंसकप्रयोगात् क्रियाविशेषणमिति टिप्पण्यां व्याख्यातं, क्रियाविशेषणे द्वितीया क्लीबत्वं चेति वैयाकरणसिद्धान्तात्, कालीय इति का० १२९ ३/४। अत्र इतिशब्दमध्याहृत्य इत्याहुरिति व्याख्यातं टिप्पण्यां, तत्रायमाशयः, आहुरितिकर्तरिप्रयोगेण कालीयशब्दादनभिहिते कर्मणि द्वितीया स्यात्, इतिशब्दाध्याहारे तु आख्यातादिभिरिव निपातेनाप्यभिधाने प्रथमानुशासनान् न काप्यनुपपत्तिः, तथा च इन्द्रियाणीतिपदमपि प्रथमान्तमेव,इतीति निपातेनाभिधानात्,एतदेव हृदि कृत्वा तथा व्याख्यातं प्रभुभिः, तत इति का० १३० १/४। तत इन्द्रियेभ्यो विषयेभ्यश्च सर्वविनाशः स्यादिति बोधयितुमन्ते अध्यायान्ते मरणाभिधा विषाम्भःपानेन मरणोक्तिः, ततो मरणानन्तरमपि सर्वे जीविताश्चेत् तदा पुनः अलौकिकदेहान्तरस्थितिरित्यर्थः।

ततश्च इत्यस्याभासे तत्रेति ज्ञानपूर्वधेनुकवधे निरूपणीये, तस्य वनलीलात्वात्

लेखः। प्रथममिदं त्रयमाहेत्यर्थः, तच्च त्रयं ज्ञानं निरूपयन्नाह सत्त्वप्रधानेय

१०-१२-१ लीलेतिवक्ष्यमाणत्वाद् रसस्वरूपज्ञानं निरूपयन्नित्यर्थः, तादृशलीलार्थं वनप्रवेशे हेतुमाहुर्वन एवेति, वनस्य तत्तद्रसस्वरूपज्ञापकस्तम्भादिसात्त्विकभावहेतुत्वान् तत्रैव तद्ज्ञानं भवतीत्यर्थः, मध्ये मार्गमेवं न भवतीति तद्व्यावर्तनार्थैवकारः, वनस्य तादृशत्वे हेतुमाहुः तत्रोद्वेगो न भवतीति, मध्येमार्गं वक्ष्यमाणमत्कृत्रिमानसम्भवेऽप्यन्यदर्शनसम्भावनयोद्वेगो भवतीति तेन न तावती लीला यया स्तम्भादिभावा भवन्ति,वने तादृशो-

द्वेगो न भवतीति वनस्यैव सात्त्विकत्वमित्यर्थः, इदमेव 'सत्त्वप्रधानैव लीले'त्यनेन वक्ष्यते, तथा च विहर्तुकाम इतिपदस्य वनपदसमभिव्याहारात् सत्त्वप्रधानलीलाकाम इत्यर्थ इतिभावः, तत्रेति तादृशवने क्रीडायां तस्या मनोजन्यत्वान् मनो निरूपणीयमतोऽग्रिमश्लोकेन तदुक्तमित्यर्थः, ननु 'तन् निरीक्ष्य मनो दधे' इतिकथनात् प्रवेशः प्राप्त एवेति भिन्नतयैकेन प्रवेशः कथमुक्त इत्यत आहुः प्रवेशश्चेति, पूर्वाध्यायेपि वनलीलोक्ता तथा-'ऽप्यविदूरे व्रजभुव' इतिवाक्याद् ग्रामसम्बन्धिन्येव, अत्र ततो भिन्नप्रक्रमेण केवलवनलीलाबोधनार्थं प्रवेशश्च वक्तव्य इत्यर्थः,मनो निरूपणीयमयं च वक्तव्य इत्यन्वाचयः, दैत्येति दैत्यस्य मधोर्भूमौ मधुवने तत्पुत्र्या वृन्दाया वनमस्तीत्यर्थः, दोषाभाव इति पौगण्डलीलाभक्तेषु पुरुषार्थान् स्थापितवानिति वक्ष्यते एवंवृन्दावने इतिचतुर्भिः, ते च चत्वार इति चतुर्वर्षात्मकत्वं तस्य, कौमारलीलाया भगवति दोषाभावनिरूपणेन भक्तेषु दोषाभावो निरूपितस्ते च पञ्चेति पञ्चवर्षात्मकत्वं तस्येत्यर्थः, तदनन्तरमिति भगवति दोषाभावेन भक्तेष्वपि दोषाभावसाधकलीलाकालानन्तरं पुरुषार्थसाधकलीलाकालमाश्रितावित्यर्थः, भगवति दोषाभावेन भक्तेष्वपि दोषाभावः सिद्ध इति टिप्पण्यां व्युत्पादितं "अन्यथा सख्यदानं न स्या"दित्यनेन, ततश्चेति चकारस्यार्थमाहुः तारुण्यमिवेति, पशूनामिति अस्मिन् पक्षे पालनं पालः पशूनां पाले पालने सम्मतौ योग्यावित्यर्थः, स्वयमेवेति पुण्यं साधितं तत्साधनं भवति इदं स्वयमेवेत्यतिशयः, स्वत इति पुण्यं फलदमिदं स्वयं फलरूपमिति चातिशयः ॥१॥

ततश्च पौगण्डवय इत्यस्याभासे भगवतो मध्यमलीलायामिति प्रेमासक्तिव्यस-
योजना। तानि क्रमेण प्रमाणप्रमेयसाधनप्रकरणैर्व्रजजनानां सिध्यन्तीति निबन्धे
१०-१२-१ उक्तं, अतः प्रमेयप्रकरणे अस्मिन् आसक्तिसाधकलीला मध्यमलीलेत्यर्थः,
पशुपालने चेति अस्मिन् पक्षे पालनं पालः पशूनां पालः पशुपालः तत्र सम्मतौ योग्या-
वित्यर्थः, समं चेति अस्मिन् पक्षे समं तुल्यमित्यर्थः ॥१॥

विशेषाकारेणेति सामान्यतस्तु प्रथमश्लोकेप्युक्त एवेतिभावः, तन्माधव इत्यत्र
लेखः। लक्ष्म्या सहेति माधवपदसमभिव्याहाराद् विहर्तुकाम इत्यस्य लक्ष्म्या
१०-१२-२ सह विहर्तुकाम इत्यर्थोऽग्रिमश्लोके 'रन्तु' मित्यस्य "सर्वाभिरेव देवताभिः
सह रन्तु"मित्यर्थं इतिविशेष इतिभावः, संवादार्थमिति वेणुनादस्य लीलास्वरूपनिरूपकत्वं वेणुपदव्युत्पत्त्या निरूपितं टिप्पण्युक्तकैमुत्येन लीलायास्तदुभयविस्मारकत्वबोधनेन सर्वोत्तमत्वबोधनाय वेणुवादनमित्यर्थः, स्वरूपानन्देति मोक्षानन्दस्वर्गाद्यानन्दावित्यर्थः, वेणोस्तादृशत्वं स्रावयन्ति तद्वादने इति, यत इति शेषः, यतो वेणुवादने सति विषयिणो

१ पिबतीति पाठः।

भोगपरा मुक्ता निवृत्तिमार्गीयाः शक्रशर्वपुरोगाः समायान्ति, तद् विहायैतद्विचारपरा
एव भवन्तीत्यर्थः, प्रयोजनान्तरमाहुः आध्यात्मिका इति, आत्मानं जीवमधिकृत्य वर्तन्ते
ते आध्यात्मिकाः,देवं भगवन्तमधिकृत्य वर्तन्ते ते आधिदैविकाः,उभयानुगुणकर्तारोपि
स्वामिनीः समानीय भगवन्तं प्रतीक्षन्ते नादश्रवणे भगवानागत इतिज्ञानादुद्बुद्धा भवन्ति,
तत आधिदैविका आगत्य स्वामिन्यागमनं भगवते सूचयन्ति इति तैर्वृतो भवतीत्यर्थः,
सौन्दर्यं वेशः अमर्यादलीला इत्यादिरूपं यशस्तैर्निरन्तरं गीयते, सामर्थ्यार्थमिति प्रति-
बन्धकागमनाभावार्थमित्यर्थः, बलात्मेति बलं प्रतिबन्धकनिरसनसामर्थ्यमात्मनि यस्ये-
त्यर्थः, क्रियायामिति गोचारणलीलायामित्यर्थः, क्रियाशक्त्येति वनप्रवेशनेनेत्यर्थः,
शुद्धानिति यथा वत्सासुरमारणेन वत्सानां कण्टकशर्कराक्षेत्रप्रवेशहेतुभूतं भावं निवर्तित-
वानित्युक्तं,तथा वनप्रवेशनेन गवां तं भावं निवर्तितवान्,तथा च शुद्धांस्तादृशभावरहिता-
नित्यर्थः, वृन्दावनस्य निर्दुष्टतृणादिमत्त्वमनुपदमेव वक्ष्यतेतस्तत्सम्बन्धाद् गवामपि निर्दुष्टत्वं
भविष्यतीति भावेन पशव्यपदमुक्तमित्याहुः स्थानमपीति, विहारे हीति क्रिया
अन्तरङ्गलीला पूर्णा स्तम्भादिभावावधिका विहारे हि सति भवतीत्यर्थो ज्ञेयः, रजो-
विकासानामिति रजोरूप उद्दीपको विकासो येषामित्यर्थः, सत्त्वप्रधानैवेति, स्तम्भादि-
पर्यन्ता रसस्वरूपज्ञानहेतुत्वात् सात्त्विकी लीला, उद्बोधकोद्बुद्धरसस्य सत्कृतिरूपा लीला
रसे लोभजननाद् राजसी, अमर्यादलीला प्रमादमोहनीयीं प्रतीतिप्रकारकाज्ञानसम्पादक-
त्वात् तामसी, इयं त्वधुना वने गृह इव निर्भयतया स्थित्यभावान् न सम्भवतीति एव-
कारेण व्यावर्त्यते, रजोलीलेति रसोद्दीपकसामग्रीविशिष्टा लीलेत्यर्थः ॥ २ ॥
तादित्यस्याभासे पश्चादिति तदागमनसूचनानन्तरमित्यर्थः, सर्वाभिरेवेति पूर्वं
लेखः । त्वेकत्रैव सङ्केतस्य कृतत्वात् तत्रैव रिरंसासीत् तदुक्तं लक्ष्म्येत्येकवचनेन सर्वा-
१०-१२-३ गमनज्ञानानन्तरं तु सर्वत्रैव रिरंसा जातेत्यर्थः, देवताभिः क्रीडायोग्याभिः,
अलौकिकीभिः लोकावेद्यतया स्थिताभिरित्यर्थः, व्याख्याने, तत्र भूदोप इति नीरस-
त्वमित्यर्थः, तथा सति तृणपुष्पफलाभावादेते त्रयो न तिष्ठेयुरित्यर्थः, तृणादीनामपि
निर्दुष्टत्वात् तदात्मकवनस्य लीलोपयोगित्वमाहुः तृणेति, तत्सम्बन्धिनां वक्ष्यमाणस्व-
रूपमञ्जुघोषत्वेन तृणपुष्पफलानामप्यास्तरणकुसुमग्रथनफलभोगादिरूपलीलोपयोगित्वमेव,
इदमेव निर्दुष्टत्वं, भगवतस्तथदाकाङ्क्षायामकालेप्याविर्भावात्, तदाकाङ्क्षाभावे कालेप्यना-
विर्भावाद्, प्रियस्थितिज्ञापकत्वमिति तेषां निर्जन एव देशे यथेच्छं क्रीडया घोष-
सम्भवेन तत्रैव ता इति ज्ञानजनकत्वमित्यर्थः, गुणपूर्णतापीति निर्दुष्टगुणवद्वात-
सेवितत्वमित्यर्थः, अन्तरिक्षदैवत्या इति वायवस्येत्याह "वायुर्वा अन्तरिक्षस्याध्यक्षः

१. देवत्या इतिसर्वादर्शेषु ।

अन्तरिक्षदेवत्याः खलु वै पशवः वायव एवैनान् परिददाती"तिश्रुतेः, तथा च गावोन्तरिक्षदैवत्या अन्तरिक्षं च वायुदेवत्यमतो वायुर्गवाधिपतिरित्यर्थः, रुद्रदेवत्यपक्षेपि त्रिदेवतापक्षे रुद्रस्यापि वायुभेदत्वाद् गवाधिपतित्वं वायोः, तदैव लीलेति वायोर्दोषराहित्ये गवाधिपतित्वादरण्यस्यान्तरङ्गनिकुञ्जाधिपतित्वाच् चान्तरङ्गनिकुञ्जेषु ता न गमयेदितिभावः, (आगन्तुकेति औष्ण्यचण्डतानिकृष्टगन्धश्च वक्ष्यमाणगुणैरेव परिहृतो भवतीतिभावः, जलं पुष्पाणि च विशेषणान्युक्तानीतिशेषः, तेनैते गुणाः उक्ता इतिशेषः), अग्रे लयविक्षेपेति लयः शोषः विक्षेपः प्रवाहः तडागे नद्यां च तत्सम्भवात् सरःपदमित्यर्थः, सदादीति पयसि महन्मनःप्रख्यत्वकथनेन पयसाति सरसि महत्प्रख्यत्वमुक्तं जातमितिभावः, पयसो मनस्त्वं तत्सम्बन्धेन सरसो महत्त्वं च सादृश्येन कल्पनया, यथा ज्योतिषोल्पदोग्धृत्वादिसादृश्येनाजात्वं "ज्योतिरुपक्रमा"दितिसूत्रे व्युत्पादितं तथात्रापि ज्ञेयं, भागवतेपि वेदफलरूपत्वात् तथा व्याख्यानं कर्तव्यमितिभावः, पुष्पविशेषा चेति कुशेशयानां रात्रिविकासित्वादिदमुक्तं, गन्धोस्यास्तीति अस्तिविवक्षायां मत्वर्थीय इन्, तेनापीति आमासे मनो दधे इत्यत्र धातोर्धारणार्थमादाय वाक्यार्थ उपक्रान्तः, अत्र पोषणार्थमादाय प्रवृत्त इत्यनेनोपसंहृतः, आगमनज्ञानानन्तरं मनः कृतवान्, तादृशवायुसेवितवनदर्शने तुद्बुद्धभावः सन् प्रवृत्त एवेत्यर्थः, तथा च धात्वर्थतावच्छेदकावच्छिन्नो वाक्यार्थ इत्युपक्रमोपसंहाराविरोध इत्याकलनीयम्, तथा च प्रवृत्त इत्यस्य मनः पोषितवानित्यर्थः, दर्शनेन प्रवृत्तौ मनःपोषस्यावान्तरव्यापारत्वेपि फलरूपप्रवृत्तिनान्तरीयत्वात् प्रवृत्तित्वेनोक्तः, व्यापारान्तरमाहुः भृङ्गादिष्विति, साम्यज्ञानं चावान्तरव्यापार इत्यर्थः ॥३॥

तन्मञ्जुघोपालीत्यस्याभासे तत्र स्थिताभिरिति वृन्दावनगोवर्धननिकटवर्तिग्रामस्थिताभिरित्यर्थः, देवताभिरिति व्रजवरनितम्बिनीभिरित्यर्थः,
योजना।
१०-१२-३ परोक्षवादेन "देवता"पदवाच्यत्वात् तासां, अन्तरिक्षदेवत्याः पशव इति 'वायुर्वा अन्तरिक्षस्याध्यक्षः अन्तरिक्षदैवत्याः खलु पशवो वायव एवैतान् परिददाती'तिश्रुतेर्वायुरन्तरिक्षस्याध्यक्षः, अन्तरिक्षं पशुदैवतमतो वायोरुभयाधिपतित्वं, भृङ्गादिष्विति अलिभृङ्गद्विजादिष्वित्यर्थः, त्रयो गुणा इति मञ्जुपदवाच्यास्त्रयो गुणास्तत्र निर्दुष्टत्वमेको गुणः भगवत्स्वरूपनादानुभवानन्दजत्वलक्षणो द्वितीयः स्वस्थितिदेशे भगवत्स्थितिज्ञापकत्वरूपस्तृतीयः ॥ ३ ॥

'रन्तुं मनो दध' इत्यनन्तरमे'वंवृन्दावने' इत्येव वक्तुमुचितं तथापि मध्ये श्लोकपञ्चक-

१. एतदधिकमेकस्मिन्नादर्शे ।

लेखः । मुपोद्घातार्थमित्याहुः कदाचिदित्यारभ्य बोधयतीत्यन्तेन, प्राकृतेति
१०-१२-४ प्राकृतैः पदार्थैः रतिमित्यर्थः, प्राकृतसामग्र्या रतिं करोतीतिशङ्कायां
लीलासामग्री भावनीया न भवेदिति विवरिष्यते, स्वरूपमिति दोषाभावो गुणाश्चेत्यर्थो विवरिष्यते, भूमेश्चेति चकारेण तच्छ्लोकोक्तास्तृणवीरुधादयो ज्ञेयाः, भूमिवृक्षयोर्वन-स्वरूपत्वमाहुः वनं हीति, तत्स्था इति अलयो मृगपक्षिणश्चेत्यर्थः, स्वरूपतोपीति 'यदि दुष्टं भवे'दिति पूर्वेणान्वयः,अलीनां मृगपक्षिणां च दोषस्तत्स्थदोषः भूमेर्वृक्षाणां च दोषः स्वरूपदोषः, एवं चतुर्विधदोषे भावनया त्याज्यं स्वादियमविशेषात् सर्वैव च लीलासामग्री भगवद्भावनायां भावनीया न भवेत्, तथा सति मुक्तिरेव सिध्येन् न तु निरोध इत्यवतार-प्रयोजनं विरुध्येतेत्येतन्न्यायेन सर्वस्या अपि निर्दोषत्वेनाप्राकृतत्वं निर्धारितं भविष्यतीति-भावेन भगवता रमणारम्भे दोषाभावो वक्तव्य इत्यर्थः, तर्हि गोपैरन्योन्यं वक्तव्यं किं भगवद्बलभद्रसंवादेनेत्याशङ्क्याहुस्तानिति, बलभद्र एव च बुध्यत इत्यन्वयः, अत इति यतस्तयोरेव बोध इत्यर्थः, प्रत्यक्षत इति प्रतिबन्धकागमनार्थं बलभद्रं ज्ञापयित्वैव लीलाकरणात् तन्मानसप्रत्यक्षविषयत्वेन लीलां कर्तुं बलभद्रबोधनमित्यर्थः,स तत्रेत्यस्या-भासमाहुः यदि वनस्था इति, इत्याहेति इति 'स तत्र तत्रे'तिश्लोकेन आहेत्यन्वयः, उपलक्षितानिति लक्ष्म दर्शनाङ्कनयोः तादृशश्रियाङ्कितान् तत्सहितानित्यर्थः, तथा च सहार्थे तृतीयेतिबोध्यं, बलभद्रे सिद्धं बोधनप्रयोजनमाहुः आवेशितत्वेनेति, चतुर्व्यूह-विशिष्टभगवदावेशवत्त्वेन हेतुनेत्यर्थः, तादृशावेशसिद्ध्यर्थं बोधनमित्यर्थः, अन्यथेति एवम्बोधनाभावे सदोषत्वेन प्राकृतत्वं मत्वा तच्चिन्तनं न कुर्यात् तदा तदावेशो न भवे-दित्यर्थः, बलभद्रपरत्वेन निरूपणे हेतुरधुनैवावेशस्य शैघ्र्यमित्यग्रे वदिष्यन्त्या "वेशिनः सर्वभावेने"त्यादिना, (अतस्तत्पराणीमानि वाक्यानि न त्वावेशाधिकरणशेषपराणीत्यर्थः।)[1] तथापि तदपेक्षया अवतारस्य मुख्यत्वात् तत्परत्वेनैव कथनमुचितमित्याहुः नन्विति ॥४॥

भगवानेव जानाति बुध्यते च बलभद्र एवेति "स्वयमेवात्मनात्मानं वेत्थ
योजना । त्वं पुरुषोत्तमे"तिवाक्याद् भगवत्स्वरूपं भगवानेव जानाति वृन्दावनं
१०-१२-४ च साक्षात्पुरुषोत्तमात्मकमेवेति, तत्रस्थतरुलतालिमृगपक्षिपश्वादिरूपं भग-वदितरो न जानात्यतः प्रभुरेव निरूपयति, बलभद्रस्य वेदात्मकत्वात् स एव बुध्यते, अनेन वृन्दावनस्वरूपं वेदेनापि स्वतो न बुध्यते भगवदुपदेशेन ज्ञायते इति-सूचितमिति यत्र सर्वज्ञस्य वेदस्यापीयं व्यवस्था तत्रान्यस्य कथं बोध इति कैमुत्यं दर्शितं, स्मयन्निवाहाग्रजमादिपुरुष इत्यस्य विवृतौ अग्रे स एवाविर्भूत इति यद्यप्यावेशा-वतारयोर्मध्येवतारस्य मुख्यत्वात् तत्परत्वं वृक्षादीनां वक्तव्यं न तु बलदेवपरत्वं तथापि

१. इत्यधिकमेकस्मिन्नादर्शे ।

ज्येष्ठभ्रातुरभ्यर्हितत्वस्य वेदे निरूपितत्वाद् धर्ममार्गसरणिमादाय ज्येष्ठभ्रातुरुत्कर्षकथनार्थं तत्परत्वं वृक्षादीनां वर्णितमित्याहुः अग्रे स एवाविर्भूत इति, तर्हि बोधनमिति ज्येष्ठभ्रात्रे उपदेशस्यानुचितत्वादाशङ्का, समाधानं तु "आदिपुरुष" इत्यनेन पुरुषोत्तमत्वमादाय पुरुषोत्तमस्य सर्वगुरुत्वात् ॥४॥

अहो इत्यत्र अवान्तरभेददर्शनमिति दोषाभावार्थं सजातीयत्वात् सङ्कर्षण एव
लेखः । नमस्य इति भगवदंशावतारभेदज्ञानं वृक्षाणामित्यर्थः, प्रदर्शनेनेति 'अमी
१०-१२-५ नमन्ती'तिप्रदर्शनेनेत्यर्थः, चेतनत्वमिति नमनाच्चेतनत्वं, 'असौ लोक' इत्यादिष्वदम्शब्दस्य पारलौकिकपदार्थवाचकत्वेन अमीपदादाधिदैविकत्वं च सूचितमित्यर्थः, दैवकार्यसाधक इति यज्ञप्रतिबन्धकासुरनिवारणेन यज्ञसाधक इत्यर्थः, अत एवेति तमोपहत्यर्थं नमनकथनादित्यर्थः, नोक्त इति क्वचस्तु चतुर्व्यूहविशिष्टपुरुषोत्तमनमस्कारः, तन्मध्ये सङ्कर्षणमात्रनमस्कारोत्र भगवता उक्त इत्यर्थः, मूलभूतं चेति देहकारणीभूतं तमो यावद्देहं न गच्छतीत्यर्थः, शिष्टमिति रसानुभावनमित्यर्थः, तदर्थमिति रसानुभावनार्थमित्यर्थः,वृन्दावनेति मूले जन्मन आत्मीयत्वमुक्तं तदनेन साधितं,उत्पत्तिमत आत्मीयत्वे उत्पत्तेर्हेतुत्वाज् जन्मन आत्मीयत्वमुक्तं, तथा च वृन्दावनस्वरूपभूतानामात्मीयत्वे किं वाच्यमितिभाव इत्यर्थः, वक्ष्यति चेति भगवदीयत्वमत्र सूचितं अग्रिमवाक्याभ्यां वक्ष्यति चेत्यर्थः ॥५॥

एतेऽलिन इत्यस्याभासे विज्ञापनमिति, भगवते स्वदोषाभावगुणविज्ञापनमित्यर्थः,
लेखः । व्याख्याने, तामसा इति वृक्षवदेतेषामपि स्वरूपाज्ञानसम्भवादितिभावः,
१०-१२-६-७ राजसा इति रसोद्दीपका इत्यर्थः, प्रार्थना त्विति स एव तमोपहतिरूपो दोषाभावो गुणश्च सेवारूपः सर्वत्रानुसन्धेयः, परन्त्वत्र यशसः स्वत एव दोषनिवारकत्वात् प्रार्थना नापेक्ष्यत इत्यर्थः, गानस्य सेवारूपगुणत्वं विवृण्वन्ति प्रभूणामिति, अग्रे वने चेति सात्त्विकभावहेतौ रहःस्थले इत्यर्थः, अन्यथेति उच्चैःशब्दे सर्वेषां ज्ञानसम्भवादितिभावः, अनुग्रह इति आत्मीयत्वं माननीयमित्यर्थः ॥ ६ ॥ नृत्यन्तीत्यत्र तासां शब्देन चेति हरिणीनां स्वरूपेण तासां शब्देन च महानानन्द इत्यर्थः ॥७॥

कारिकार्थः । नृत्यन्त्यमीत्यत्र आगत इति का० १३१½, १३२½ । अत्र शिखिनां
१०-१२-७ हरिणीनां कोकिलानां च क्रमेण तोषः प्रियार्थनिवेदनं स्तुतिश्चोक्ता।

धन्येत्यस्याभासे स्तौतीति स्तुतिरुत्कर्षाधायकगुणवर्णनं, तथा चोत्कर्षार्थं दोषा-
लेखः । भावं गुणांश्च वर्णयतीत्यर्थः, व्याख्याने, धनं भगवांस्तत्सम्बन्धो यथाधि-
१०-१२-८ कारं सर्वत्र ज्ञेयः, ननु कथमस्येति आलिङ्गनस्यापि शब्दसूचितं दुर्लभत्वं कुथमित्यर्थः, प्रीणिता इति धनयोग्यताकथने तत्सम्बन्धेन धनधर्मप्रीतिजननं सूचित-

मितिभावः, अन्यथेति अधुनावेशाभावे इत्यर्थः, अर्थादिति 'आवेशिनः सर्वभावेने'त्यादिनोक्तप्रयोजनाद्धेतोस्तत्सिद्ध्यर्थमित्यर्थः,बलभद्रबोधनं बलभद्रपरत्वेन बोधनमित्यर्थः, इत्याहेति इदं निरूप्य इदं कृत्वा क्रीडां कृतवानितिहेतोस्तदनन्तरं रमणमाहेत्यर्थः, तथा च व्याख्याने अध्याहारनिषेधेप्यार्थिकमानन्तर्यमितिभावः, एवंवृन्दावन इत्यत्र स्वत एव समागतेति आज्ञामनपेक्ष्येच्छामेव ज्ञात्वा सर्वास्ताविष्टेत्यर्थः, अत इति श्रीमत्पदसूचितलक्ष्म्यावेशाद्धेतोरालम्बनवाचकैस्ताभिरित्यादिपदैरनुक्तमपि ताभिः सह रमणं सिद्धमेवेतिहेतोस्त्रयोपि निरूप्यन्ते इत्यन्वयः, अनुभावा इति गवां स्मरणे तासामागमनसम्भावनया रसे शङ्का भवतीतिशङ्कारूपव्यभिचारिभावहेतुत्वाद् धर्मस्य व्यभिचारित्वं, तथा चैते त्रयो मनोदेशधर्मा इति ज्ञेयं, आलम्बनाकथने हेतुमाहुः लक्ष्मीरेवेति, अनाविष्टाः नालम्बनमित्येवकारः, सा तु श्रीमत्पदेन सूचितैवेतिभावः, तस्यापीति नायकेपि कृष्णपदेन सत्त्वं दोषाभाव आनन्दो गुण उक्त इत्यपिशब्दः,कृष्णपदसमभिव्याहारान् मनस्यपि सत्त्वं सूचितमित्याशयेनाहुः निर्दुष्टमिति, उभयोरिति चारणरमणयोरित्यर्थः, 'रमणमिति करोतीतिशेषः ॥९॥

एवंवृन्दावने इत्यस्य विवरणे दशधा रस इति शृङ्गारादिभक्त्यन्तै रसैर्दशधा

योजना। रस इति स्वरूपानन्दो लोके लीलासृष्टौ अनुभूयते इत्यर्थः, ब्रह्मा-
१०-१२-९ नन्दापेक्षयेत्यादि ब्रह्मानन्दे हि एकरूपत्वेन सुखानुभवः भजनानन्दे दशधा रसानुभव इत्याधिक्यं, आलम्बनं तु लक्ष्म्येवेति लक्ष्म्येति तृतीया, लक्ष्म्या इव गोपिकाभिः सह क्रीडां कुर्वाणो भगवानेवालम्बनविभावरूप इत्यर्थः, यमालम्ब्य रस उत्पद्यते स आलम्बनविभाव इति रसशास्त्रराद्धान्तात्, अन्यत्र गमनशङ्काभावाच् चारयन्नेव रमणं सम्भवतीति इह "चारयन्नेवे"त्यन्तं भिन्ना फक्किका, तथा च "चारयन्नेव रेमे" इति मूले विद्यमानेन रेमे इतिपदेनान्वयो योधितः, ततो रमणं सम्भवतीतिभिन्ना फक्किका, यत एवं रमणं सम्भवति ततो रेमे इत्यर्थः, न ह्यत्र गोचारणक्रियाव्यापृतस्य भगवतः आनन्दतिरोभावः किन्तु गोचारणं कुर्वत एव रमणसम्भवात् परमानन्दानुभव इतिहार्दं, अत एतत्सूचनार्थं सानुगपदं मूले अनुगा गाश्चारयन्ति स्वयं तु रमत इतिभावः ॥९॥

क्वचिदित्यत्र निजभक्तैरिति वेण्वादिकं सङ्गे नयन्ति तादृशैरित्यर्थः, स

लेखः। एवेति अर्थभोगवानेवेत्यर्थः, भक्तैश्वर्योद्भावनमाहुः तेषामप्यर्थभोग
१०-१२-१० इति ॥१०॥

क्वचिद् गायतीत्यस्याभासे एवं धर्मोद्भावनेनेति 'रेमे सञ्चारयन्नद्रे'रित्यनेन

योजना। गोचारणाख्यक्रीडानिरूपणेन धर्मोद्भावनमुक्त्वेत्यर्थः, निबन्धे "मोक्षः
१०-१२-१० कामश्चेतिसाक्षात्पुरुषार्थद्वयं मतं तत्साधकत्वं धर्मस्ये"ति व्यवस्थापितं,
प्रकृतेपि व्रजसीमन्तिनीभिः सह तृतीयपुरुषार्थरूपरमणस्य साधकं गोचारणमिति धर्मत्वं ज्ञेयं, साक्षात्पुरुषार्थत्वं शृङ्गाररमणस्य, तत्साधकत्वं गोचारणस्य, एवं व्रजसुन्दरीविचारेपि धर्मत्वं तासामपि शृङ्गाररमणरूपपुरुषार्थं गोचारणलीलैव साधयति ॥१०॥

कामलीलामाहेति भगवत्कूजितबन्धस्वरूपज्ञाने भगवत्कामो भवतीतिभावः,
लेखः। क्वचिच्चेत्यत्र रसार्थमिति कूजितोद्गतरसानुभवार्थमित्यर्थः, सम्बद्धस्येति
१०-१२-११ सहितस्येत्यर्थः, अन्ये सर्वे इति जीवनिष्ठा आश्लेषादय(स्तत्स्वभावाज्
जायन्ते मुख्यो भोगस्तु रसनिर्गमनमेवातोनुकरणं तस्यैव)इत्यर्थः, अत एवेति कामस्य विलक्षणत्वादेवेत्यर्थः, शब्द इति शब्दस्य मनःपूर्वकत्वात् तज्जनकं मनःसम्बन्ध्येव किञ्चिद् वाच्यमतो मानसैकशरणस्यैव कूजितं,तादृशं भगवत्कूजितजनकं भवतीत्यर्थः, "मानस"पदे श्लेषो ज्ञेयः, कूजितस्य भगवदीयत्वात् तज्जनककूजितवति रसारसयोर्भेदकत्वमुक्तं, तथा च तदनुकरणेन भगवता स्वकूजितस्य यत्र यथोचितं तत्र तथा श्रवणमश्रवणमन्यथाश्रवणं वा भवतीति रसारसभेदपूर्वकत्वं बोधितं स्वस्य मानसैकशरणत्वं च, मानसमेवैकं शरणं गृहं यस्य तत्त्वं, अन्तःकरणसम्बन्धित्वमित्यर्थः, उपलक्षणेन सर्वस्यैवेन्द्रियकार्यस्य रसारसभेदपूर्वकत्वं बोधितमितिभावः, अत एवेति भगवत्कूजितजनककूजितवत्त्वादेवेत्यर्थः, सर्वेति जीवान्तरविलक्षणत्वमित्यर्थः, कलानामिति अव्यक्तमधुरशब्दानां हंसः प्रकाशक इत्यर्थः, हंसानां कूजितमितिबहुवचनैकवचनयोस्तात्पर्यमाहुः बहूनामिति, बहुप्रतिपादितस्यैकस्य श्रवणे श्रोता तन्निष्णातो भवतीति भगवति कूजितनिष्णातत्वं सूचितमित्यर्थः, भगवांस्त्विवति हंसस्त्वेक एकविधं कूजितं करोति भगवांस्तु सर्वेषामेवेति तुशब्दः, (हांसयन् क्वचिदित्यस्याभासमाहुरन्यथा मेघादीति क्रीडायामेतत् द्वयमप्यस्तीति ज्ञापयितुमेवं नृत्यन्तमभिनृत्यतीत्यर्थः, आद्यनृत्यपक्षे ॥ रस एवास्तीति तत्र रसेनेत्युक्तं,)तदाहेति रसपोषकोभयनिरूपणार्थमिदं नृत्यमिति शृङ्गारोद्बोधकनृत्ययुक्तस्य हासविषयत्वकथनेन भावस्य पक्षिनिष्ठत्वकथनेन चाहेत्यर्थः ॥११॥

क्वचिच्चेत्यस्याभासे एवमर्थलीलामुक्त्वेति "क्वचिद् गायति गाय"त्स्विति पूर्व-
योजना। श्लोकेनेत्यर्थः, भगवत्कर्तृको गानादिसम्पत्तिभोगो भगवतोर्थलीला,
१०-१२-११ तादृगर्थलीलामनुभवन् भगवानेवार्थरूपपुरुषार्थस्वरूपो भक्तानाम् ॥११॥

मेघगम्भीरयेत्यत्र मुक्तिश्चेति संसारान् मोचनमित्यर्थः, अत्रापि स्वस्य सहयोग-

१. ३. इत्यधिकमेकस्मिन्नादर्शे। २. तादृशमिति भगवत्कूजितरूपशब्दजनकमित्यर्थ इत्येकस्मिन्नादर्शे।

त्वानित्यर्थः, तदुक्तं मूले महत्या पूजयित्वाहेत्यनेन, मानसिकी पूजा कुतो नोक्तेत्या-
काङ्क्षायां मानसिक्याः पूजाया वाचनिक्यां पूजायामन्तर्भावमाहुः मनः पूर्वरूपं वागुत्तर-
रूपमिति मानसिकं तत्रैव प्रवेक्ष्यतीत्यनेन, वाचः उत्तररूपत्वादुत्तररूपस्य पूर्वरूपं
विनाऽसम्भवादुत्तररूपेण वाचनिकेन तत्पूर्वरूपं मानसिकं आक्षिप्यत इति वाचनिकेन
पूजनेन मानसिकं उक्तमेव, तदेतदाहुः मानसिकं तत्रैव प्रवेक्ष्यतीति, मानसिकं
पूजनं तत्रैव वाचनिके पूजने एव प्रवेक्ष्यतीत्यर्थः, प्रकारान्तरेण मानसिकीपूजामाहुः
क्रियेत्यारभ्य मानसिकी पूजेत्यन्तेन, तथा च तद्दर्शनमहोत्सव इत्यनेनोक्तो
महोत्सवो मानसिकी पूजेत्यर्थः ॥४॥

त्वत्पादभाज इत्यत्र लोके चरणसमागता गच्छन्तीति चरणस्य गतिमत्त्वात् चरणे
योजना। ये समागताः पादुकादयो गतिमन्तो भवन्तीत्यर्थः, अतो यथैतद्विपरीतं
१०-२५-५ एवं फलमपीति भगवच्चरणे समागतस्य तु परिभ्रमणशीलस्यापि सर्वगति-
राहित्यं भवतीति विपरीतत्वं, एवं फलमपि विपरीतं यद्गतिरहितस्याप्यपारप्राप्तिरिति॥५॥
लेखः। नमस्तुभ्यमित्यत्र प्रधानत्वेनेति प्रकृतित्वेनेत्यर्थः, निमित्तत्वेनेति
१०-२५-६ कर्तृत्वेनेत्यर्थः ॥६॥

नमस्तुभ्यं भगवत इत्यत्र चतुष्टयमाहेति श्रुतिस्मृतिपुराणानुभवानां चतुष्टय-
योजना। मित्यर्थः, तुभ्यं भगवते ब्रह्मणे परमात्मने इतिविशेषणचतुष्टयेन,
१०-२५-६-७ तदेतदाहुः तुभ्यमिति साक्षात्कृतायेत्यारभ्य स्मार्तायेत्यन्तेन, साक्षा-
त्कृताय अनुभवसिद्धायेत्यर्थः, वैष्णवसिद्धान्तसिद्धायेति पुराणसिद्धायेत्यर्थः, ब्रह्मण
इति श्रौतायेति श्रुतिसिद्धायेत्यर्थः, स्मार्तायेति स्मृतिसिद्धायेत्यर्थः, प्रधानत्वेन चेति
प्रकृतित्वेनेत्यर्थः, पाषण्डेष्विति मायावादादिमार्गेष्वित्यर्थः, निमित्तत्वेनापीति कर्तृ-
त्वेनेत्यर्थः, मायावादिमते मायाया एव कर्तृत्वस्वीकारात् ॥६॥ आनीतोयं तव पिते-
त्यत्र वेपमानः पुरतो वर्तत इत्यस्यार्थष्टिप्पण्यां स्फुटः, आनीतोयं तव पितेत्यस्य
विवरणे तव पितेतिवचनादपराधः सोढ इति वरुणेन लीलाया एव मुख्यत्वं स्वीकृतं,
लीलायामेव नन्दे पितृत्व तव पितेत्यनेनोक्तं केवलब्रह्मधर्माङ्गीकारे तु भगवतो जन्म-
राहित्यान् न पितृत्व व्रजपतौ सम्भवति, लीलायां पितृत्वेनाङ्गीकारात् तस्य भगवदङ्गीकृत-
पितृत्वस्यैव वरुणेनोक्तत्वात् सन्तुष्टो भगवानतोपराधः सोढ इतिहार्दम् ॥७॥

नन्दस्त्वित्यत्र तल्लोके स्थितस्य पूर्वं दर्शने लौकिकमन्त्रिरूपेणैव दर्शनं भवेत् तथा चाती-
लेखः। न्द्रियत्वं न स्यादतो भगवदागमनानन्तरं भगवद्दृष्ट्या दर्शनमित्याशयेनाहुः
१०-२५-९ नीतोपीति ॥९॥
योजना। नन्दस्त्वतीन्द्रियं दृष्ट्वेत्यस्याभासे यथैकं वचनमित्यादेरर्थष्टिप्पण्यां
१०-२५-९ स्फुटः ॥९॥

ते त्वौत्सुक्येत्यस्याभासे प्रार्थितवन्त इति मनसीतिशेषः, अपीति सम्भावनो-
लेखः। केस्तात्पर्यमाहुरथ यदीति ॥१०॥ जनो वै इत्यत्र "ते तु ब्रह्महृद"मित्यत्र
१०-२५-१०-१२ टिप्पण्यां द्वितीयव्याख्याने साधारणरीतिमाकव्यमुक्तमत एवं कथनम्।१२।
इति पञ्चविंशाध्यायव्याख्या।

इति सञ्चिन्त्येत्यत्र उभयोरन्यतरनाशमाशङ्क्येति मर्यादारक्षकत्वमहाकारु-
योजना। णिकत्वयोरन्यतरस्य नाशमाशङ्क्येत्यर्थः, यदि साधनराहित्येपि
१०-२५-१३-१४ फलं स्यात् तदा मर्यादारक्षकत्वं भज्येत यदि साधनाभावे फलं न
दद्यात् तदा महाकारुणिकत्वं भज्येतेतिशङ्का ॥१३॥ सत्यं ज्ञानमनन्तं यद् ब्रह्मेत्यस्य
विवृतौ यद् वैकुण्ठाख्यं सर्ववेदान्तप्रत्ययं यद् ब्रह्मैवेति "अव्यक्तोक्षर इत्युक्तस्त-
माहुः परमां गतिं यद् गत्वा न निवर्तन्ते तद् धाम परमं ममे"ति भगवद्गीतासु अक्षर-
ब्रह्मणः धामत्वोक्तेः, "तदाहुरक्षरं ब्रह्म सर्वकारणकारणं विष्णोर्धाम परं साक्षात् पुरुषस्य
महात्मन" इत्यत्राप्यक्षरब्रह्मणः धामत्वोक्तेः, "ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसञ्ज्ञकः"
इतिबृहद्वामनपुराणे वैकुण्ठस्य ब्रह्मानन्दमयत्वोक्तेश्च ॥१४॥

ते तु ब्रह्महृदं नीता इत्यस्याभासे गोकुलस्य सर्वस्य विलय एवाभूदित्यस्या-
योजना। र्थष्टिप्पण्यां स्फुटः, पुनः प्रत्यापत्त्यर्थमित्यस्याप्यर्थः स्फुटः, ते तु
१०-२५-१५ ब्रह्महृदमित्यस्य विवृतौ तदात्मकांशस्य लोकस्येत्यस्यार्थः, काष्ठाग्नि-
र्वदित्यस्यार्थः, तेषां पुनः काष्ठता अर्धज्वलितानामपि सम्पादनीयेत्यस्यार्थः,
अन्यथाग्रे लीलेत्यस्यार्थः, तच्च वेदात्मकब्रह्मणीत्यस्यार्थः, तद्धि तस्य जलात्मक-
मित्यस्यार्थः, अत एव शब्दब्रह्मणः जलरूपतेत्यस्यार्थस्तत्कार्यमिदमेतस्यार्थः,
अग्रे चेत्यस्यार्थः, उत्तमाधिकारिणो हि ते शब्दात्मका एवेत्यस्यार्थः, क्रमश्चाय-
मित्यादेरर्थः, अन्यथा प्रमाणगृहीना एतस्यार्थष्टिप्पण्यां स्फुटः, ददृशुर्ब्रह्मणो
लोकमित्यस्य विवृतौ तदार्द्रनयना इत्यस्यार्थष्टिप्पण्यां स्फुटः, सुबोधिन्यां शब्दब्रह्मणो
जलरूपतोक्ता सा तु युक्तैव, जलस्य शब्दात्मकतायाः स्फुटमभिधानात्, तथा चोक्तं
पद्मपुराणे प्रयागमाहात्म्ये श्रीयमुनार्याष्टाशतनामात्मकस्तोत्रे "त्रयी रसमयी सौरी ब्रह्मविद्या
सुधावहे"ति, अनेन श्रीयमुनाजलस्य वेदत्रयीरूपतोक्तेति जलशब्दब्रह्मणोरभेदो ज्ञातव्यः॥
इतिश्रीमद्गोवर्धनधरश्रीवल्लभाचार्यवरश्रीविट्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामदीक्षित-
बालकृष्णेन विरचिता दशमस्कन्धपञ्चविंशाध्यायसुबोधिनीयोजना सम्पूर्णा।
कारिकार्थः। १०-२५-१५ ते तु ब्रह्महृदं नीताइत्यत्र ब्रह्मानन्दादिति का०२४५½।
स्फुटार्थकम्॥ इतिपञ्चविंशाध्यायकारिकाव्याख्या॥ इति पञ्चविंशोऽध्यायः॥
इति तामसप्रकरणे साधनप्रकरणम्।

## अथ श्रीतामसफलप्रकरणकारिकार्थः।

१०-२६-० षड्विंशाध्याये ब्रह्मानन्दादिति का० २४६¾-२५४¾।
इतिप्रकारेण "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता"
ब्रह्मानन्दात् समुद्धृत्येत्यादि
युज्यते
ब्रह्मानन्दात् समुद्धृत्य भजनानन्दयोजने कर्तव्ये सति या लीला
योग्या भवति सा (लीला) तुर्ये फलप्रकरणे निरूप्यते, लौकिकस्त्रीष्विति रसात्मको
भजनानन्दो हि रसशास्त्ररीत्या लौकिकस्त्रीषु परकीयासु संसिद्धः कुमारीणामपि
भगवता सह विवाहाभावात् तन्न्याय एव, तद्द्वारा तत्कथाश्रवणेन तद्भावोदये पुरुषेपि
स रसो भवेत् नान्यथेत्यर्थः, ब्रह्मानन्दानुभवोक्तेर्मुख्यप्रयोजनं ब्रह्मानन्दभजनानन्दयो-
स्तारतम्यज्ञापनं पूर्वाध्यायसमाप्तिकारिकायामुक्तं,गौणप्रयोजनमाहुः स्वानन्दानुभवार्थ-
मिति, पुरुषोत्तमानन्दानुभवार्थं लक्ष्मीतुल्यतारूपा योग्यतापि स्वामिनीषु निरूपितेत्यर्थः,
लक्ष्मीतुल्यतायां हि भगवद्रमणमितिमर्यादा, सा च ब्रह्मानन्दरूपा, तथा च पूर्वा-
ध्याये ब्रह्मभावोक्त्या लक्ष्मीरूपत्वमुक्तं जातमित्युक्तमर्यादापि सम्पन्नेतिभावः, अथ वा
द्वादशाध्याये "गोप्योन्तरेण भुजयोरपि यत्स्पृहाश्री"रितिवाक्ये व्रजस्त्रीष्वेव स्वानन्दा-
नुभवार्थं योग्यता निरूपितेत्यर्थः, तथा च तत्रैव एतदधिकारवत्त्वात् तत्रैव भजना-
नन्ददानमितिभावः, यद्वा "हेमन्ते प्रथमे मासी"त्यत्र कात्यायनीप्रवेशरूपा प्रभुसम्बन्ध-
योग्यता निरूपितेत्यर्थः,एवं टिप्पण्यनुसारेण त्रिधा व्याख्यानं, तद्द्वारा पुरुषाणां
चेति, कात्यायनीप्रवेशद्वारा तासामनुग्रहद्वारेति वार्थः, स्त्रिय एव हि तं पातुं शक्ता
इति तं पुरुषरूपं भगवन्तमित्यर्थः, तत्स्त्रीकर्तृकपानानन्तरं पुमान् भगवान् तासु तं
रसं पातुं शक्त इत्यर्थः, रसाधिक्ये पुम्भावादितिभावः, यतस्ता एव रसयोग्यास्तत्पाने
शक्ताश्च, अतो न कदाचित् रमणे व्यवधानं करोतीत्याहुः अतो हि भगवानिति, आन्तरं
त्विति सखीवृन्दे मिथो गुणानुवादे लीलासहितप्रियतमप्राकट्येन अन्तर्ये भावविशेषा
उत्पद्यन्ते न ते भङ्गमपीत्यस्य परत्वं,ततः शब्दात्मिका लीलेति युगलगीताध्यायोक्त-
गुणगानलक्षणशब्दात्मिकेत्यर्थः, निर्दुष्टेति रूपलीलायां मानादिजनितेन प्रभौ दोषारोपेण
सदोषत्वं, नामलीलायां तु प्रभौ दोषारोपात्मकदोषाभावेन निर्दुष्टत्वमित्यर्थः, शब्दा-
त्मिकापि लीला प्रवृत्तिनिवृत्तिभेदेन द्विरूपा, तत्र पूर्वा षष्ठाध्याये उत्तरा सप्तमाध्याये, तत्र
पूर्वस्याः सदोषत्वादत्रापि पूर्वाध्याये वेदात्मकद्वेषरूपत्वेन बलदेवस्य तत्साहित्येन कृतायां
लीलायां शङ्खचूडोक्त्या सदोषत्वं, तद्वधोक्त्यात्र सापि निर्दुष्टेति ज्ञाप्यत इत्यर्थः, रूपस्य
पञ्चात्मकत्वात् तन्निरूपणं तावद्भिरध्यायैः कृतमित्याहुः ततो रूपप्रपञ्चस्येत्यादि,
पञ्चात्मके रूपे येनांशेन या लीला कृता तां तां लीलां क्रमेणाहुः आत्मनेत्यादिसार्धेन,

१ फलप्रकरणस्य लेखः फलप्रकरणसुबोधिन्या सह वर्तते योजना न पृथङ्मुद्रिता प्राप्यते तस्मात् तौ अत्र न लिखितौ।

अत्र पञ्चस्वध्यायेषु एकैकस्मिन्नध्याये एकैका लीला, अथ वा प्रत्यध्यायोक्तलीलायामपि पञ्चविधत्वं ज्ञेयं, अत्र सैन्धवघनवत् एकरसे भगवद्रूपे कथं पञ्चविधत्वमित्याशङ्क्य टिप्पण्यां यथेन्द्रियादिरूपत्वमित्यादिसार्धपञ्चकारिकाभिरुपपादितं, रूपं प्रतिष्ठितमिति हरिप्रियास्विति शेषः, पूर्णः स्वरूपानन्दो दत्त इत्यर्थः, जीवानानन्दयत् स्वयमिति, एतावत् स्वतो भगवता कृतं न तु साधनबलेनेत्यर्थः, तर्हि नादेनाकारणं "प्रतियात व्रजं नेह स्थेय"मित्यादिना गमनबोधनादिकं चानुपपन्नमित्याशङ्क्य तत्रोपपत्तिं वदन्तो भगवान् लीलां कुर्वन् शास्त्रमर्यादामपि प्रदर्शयतीत्याशयेनाहुः ते चेत् समर्पितात्मान इतिसार्धेन, सर्वात्मभाववन्तश्चेद् भक्ता भवन्ति तदैवायं रसः प्राप्यो नान्यथेत्यर्थः, सर्वात्मभावोपि भगवत्कृत एव भवति नान्यथेतिज्ञापनाय तदुपायरूपरिरंसाचन्द्रोदयगाननिषेधवचनान्युक्तानीत्याहुः तत्रोपायश्च रूप्यत इति, तत्र समर्पितात्मत्वे इत्यर्थः, मानतिरोधानाभ्यामन्यापि सा मर्यादा ज्ञाप्यत इत्याहुः आत्मा यावत् प्रपन्नोभूदिति, भवतीति वक्तव्ये अभूदितिप्रयोगे लडर्थे लुङ् छान्दसः, आत्मा यावत्पर्यन्तं प्रपन्नो भवति तावदेव हरी रमते बहिः प्रकटो भवति अन्यदा तु बाह्यतस्तिरोधत्ते, कुत इत्याकाङ्क्षायामाहुः सोन्तःकरणसम्बन्धीति, स हरिरन्तःकरणसम्बन्धी, अतोन्तःप्रपत्त्यभावे बाह्यतस्तिरोधानं युक्तमितिभावः, एतच्च टिप्पण्यां चतुर्धा व्याख्यातम्, ता वार्यमाणाः पतिभिरित्यत्र एकवाक्यत्वबोधनाय याज्ञवल्क्यस्मृतिमाहुः "रक्षेत् कन्यां पिता विन्नां पतिः पुत्रस्तु वार्धके अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रिया" इति, अस्यार्थः, कन्यामविवाहितां पिता रक्षेत्, विन्नां विवाहितां पतिः, वार्धके पुत्रः, तेषां पुत्रादीनामभावे ज्ञातयो रक्षेयुः।

१०-२६-१५ कामं क्रोधं भयं स्नेहमित्यत्र जीवे इति का० २५५३, २५६३। एतेन तन्मयतां यान्तीत्यत्रोपपत्तिरुक्ता, यतो भावनातो जीवादिषु हरिराविष्टो भवेत्, यथा ज्ञाने सति पूर्वप्रपञ्चलयो भवति तथा यतो भावनातोपीत्यर्थः ॥१५॥

१०-२६-१८ स्वागतं वो महाभागा इत्यत्र तम इति का० २५७३। तमोरजःसत्त्वानां भेदा यत्र तादृश्यः स्त्रियो निरूप्यन्ते, स्वान्तपर्यवसानत इति, तमसः फलं लयः, रजसः फलं भावविशेषोत्पादनं, सत्त्वस्य फलं तस्य भावस्य पालनं, तथा च स्वस्य तमआदेरन्तः फलं तत्र गुणानां पर्यवसानात् तथा निरूप्यन्त इत्यर्थः, तासु सगुणनिर्गुणभेदेन दशविधासु स्त्रीषु विषये भगवद्वाक्यान्यपि "स्वागतं वो महाभागा" इत्यादीनि यथायथं यथोचितानीत्यर्थः ॥१८॥

१०-२६-३१ मैवं विभोर्हतीत्यस्याभासे वाक्यानामिति का० २५८३। वाक्यानां भगवद्वाक्यानां बाधवाक्यानि तासां वाक्यानि तावन्ति भगवद्वाक्यसमसङ्ख्याकानि दश, "व्यक्तं भवा"निति प्रार्थनावाक्यं चाधिकं, तेनैकादशविधास्तासां वाचो भवन्तीत्यर्थः ॥३१॥

१०-२६-४२ इति विक्कवितं तासामित्यत्र षड्भिः श्लोकै रमणनिरूपणे सङ्क्षा-
तात्पर्यमाहुः षड्गुणैश्वर्यभावेनेत्यादि का० २५१¾–२६२¼। षड्गुणैश्वर्यभावेनैकार्थेन
षड्भिः श्लोकैः रमणनिरूपणे तात्पर्यमुक्तं,स्वरूपेणापीति स्वरूपेणापि रेम इत्यर्थः, अन्त्येन
विप्रलम्भोक्त्या द्विविधोपि शृङ्गारो निरूपित इति सम्पूर्णेन स्वरूपेण रेमे इतिभावः,
वाक्यार्थानाहुः सामान्येत्यादि, अत्र वाक्यार्थविभागो दुर्बोधोपि प्राचां व्याख्यानुसारेण
यथाकथञ्चिदुच्यते, आद्येन सामान्यरमणं,ततो विशेषरमणमित्याहुर्विशेषे मेलनं पुरेति,
विशेषरमणनिमित्तं पूर्वं मेलनं ताभिः सह समागमः, तदुक्तं "ताभिः समेताभि"-
रितिश्लोकेन, ततःपश्चाद् द्वितीयेन श्लोकेनो"पगीयमान उद्गाय"न्नित्यनेन बाह्येन
स्वरूपाद् बाह्यप्रकारेण गतिविलासादिना रमणं, ततःपरं "नद्याः पुलिनमाविश्य"ति-
तृतीयेन श्लोकेनान्तरं स्वरूपनिष्ठं बन्धादिप्रकारेण रमणमित्यर्थः, ततो नानाविलासेन
जातकेलिविभेदत इति अजातसरकेलिजातसरकेलिविभेदेन द्विविधा विलासा इति
द्वाभ्यां तदुक्तिरित्युक्तं टिप्पण्यां, अयं टिप्पणीलेखो व्याख्यातः श्रीवल्लभगोस्वामिभिः,
"नद्याः पुलिनमाविश्य'तिश्लोकेन आन्तररमणनिरूपकेण अजातसरकेलिविलासा उक्ताः,
"बाहुप्रसारे"तिश्लोकेन जातसरकेलिविलासा इति, अत एव सुबोधिन्यां 'नद्याः पुलिन-
माविश्य'तिश्लोकव्याख्यानान्ते 'एवं तासां सर्वभावेन जातसरकेलित्वं सम्पादित'मित्युक्तं,
तथा च "इति विक्कवित"मित्याद्येन सामान्यरमणं,ततस्त्रिभिर्विशेषरमणं,तत्राद्येन समागमः,
द्वितीयेन बाह्यरमणं, तृतीयेन आन्तररमणं, तत्रैव अजातसरकेलिविलासः. एवं चत्वारः,
"बाहुप्रसारे"त्यनेन जातसरकेलिविलासः, षष्ठश्लोकार्थमाहुः विप्रलम्भस्य सिद्ध्यर्थ-
मिति,सप्तमार्थमाहुः तिरोभावस्तनश्चापीति, तिरोभावे हेतुमाहुः नायं लौकिककामुक
इति, अत्रैवाग्रे क्रिया सर्वापीति का० २६३½–२६६¼। भगवतो भक्तानां चालौकिकत्वं
लौकिककामाभावं चाहुः क्रिया सर्वापीति, भगवल्लीलायां क्रिया सर्वापि सैव लौकिक-
सदृश्येवास्ति परन्तु भगवति लौकिकः कामो न विद्यते इत्यर्थः, एवं भगवति लौकिक-
कामाभावमुक्त्वा तासामपि लौकिककामाभावमुपपादयन्ति तासां कामस्येति,अलौकिक-
कामेन तासां कामस्य पूर्तिरितिहेतोस्ता अपि तथा लौकिककामरहिता इत्यर्थः,
विजातीयेन विजातीयस्य पूरणासम्भवात्, तासु लौकिककामवत्त्वे बाधकमाहुः कामेन
पूरितः काम इति, प्राकृतेन कामेनेत्यर्थः, अत्रत्यभक्तेषु संसाराभावात् प्राकृतकामा-
भावो निःसन्दिग्ध इति ज्ञापनायोक्तं न संशय इति, अतो न कापीति मोक्षफला
मर्यादा, कामे सति न मोक्षः, कामाभाव एव मोक्ष इतिलक्षणापि न भग्नेतिसम्बन्धः,
अतः कामस्य नोद्बोध इति भगवच्चरित्रस्य निष्कामत्वादेतच्छ्रवणे लौकिककाव्यवन्
न लौकिककामोद्बोध इत्यर्थः, ततःकारणात् "कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीर"
इतिशुकवचनं स्फुटं स्फुटार्थमित्यर्थः ॥४२॥

१०-२७-० सप्तविंशाध्याये स्वानन्देति का० २६७½—२७०¾। पूर्वाध्यायोक्तान्तर्धानतात्पर्यमाहुः स्वानन्दस्थापनार्थायेत्यादिसार्धेन, भगवता कामलीला स्वानन्दस्थापनार्थाय कृता, तत्र बाह्यो बाह्यप्रकारेण जनितः स आनन्दो यथान्तः पुष्टः सन् देहेन्द्रियादिषु निविशेत् तदर्थं लीलया सहितो भगवान् तास्वविशत् प्रविष्टवान्, चत्वारोत्र निरूप्यार्था इति 'चतुर्थोर्थो गुणगान'मितिविवृतं टिप्पण्यां, उक्तार्थत्रयनिरूपणे प्रकारविशेषमाहुः उद्देशत इत्यादि, आद्यैस्त्रिभिः श्लोकैस्त्रयाणामुद्देशः कृतः, आसक्तेर्लक्षणमन्वेषणं हरेः क्रिया भगवतो लीला, सा च "कस्याश्चित् पूतनायन्त्या" इत्यादिना लक्षणतो निरूपिता, गर्वाभावलक्षणं च "अनयाराधितो नून"मित्यनेनोक्तं सपत्नीभाग्याभिनन्दनं, अन्वेषणफलं च "व्यचक्षत वनोद्देशे पदानि परमात्मन"इत्यत्रोक्तं पददर्शनं, लीलावेशफलं च प्रियाधीनत्वदर्शनेपि प्रिये दोषारोपाभावपूर्वको "रेमे तया चात्मरत" इत्यादिनोक्तो भावः, गर्वाभावफलमितरविस्मृतिपूर्वकं तत्प्राप्त्यर्थैकप्रयत्नः, स च "ततोविशन् वनं चन्द्रज्योत्स्ना यावद् विभाव्यते" इत्यादिनोक्तः, गुणगानं तु विशेषतोग्रिमाध्याये उक्तं, अत्राध्यायेपि "पुनः पुलिनमाविश्य"त्यनेन सामान्यत उक्तमिति कारिकायां चकारेण सूचितं, एवं आसक्तिहरिलीलागर्वाभावगुणगानात्मकाश्चत्वारोर्था अत्र तिरोधानलीलायां निरूप्या इत्युक्तं, लीलान्वेषणतत्परा इति लीलायामन्वेषणे च तत्परा इत्यर्थः, "रसमन्तर्गतं चक्रु"रिति बहिस्तिरोधानादित्यर्थः।

१०-२७-४ "गायन्त्य उच्चै"रित्यत्र शब्द इति का० २७१½-२७२¾। एतदर्थंटिप्पण्यां विस्तरेणोक्तः, तत एवात्र सङ्गृह्यते, ननु मनोरानन्दरूपत्वेन तद्भावेषु सत्सु सदानन्द एवोचितो न तु वक्ष्यमाणदुःखावस्थेत्याशङ्काभावाय तस्या अवस्थायाः स्वरूपमाहुः शब्दो हि धूमवदिति, एवं सति स्वरूपस्य रसात्मकत्वेन अत्रत्या भावाः सर्वे रसात्मका एवेति मन्तव्यं, भक्तानां भगवद्गुणगानात्मकः शब्दो हि अगरुप्रभृतिधूमवत् विनिर्गच्छन् सन् विराजते, तारतम्यं प्रतिक्षणं वैचित्र्यं च गच्छति, अत्र तापकत्वेन विरहोग्निरेव, अग्निर्यथार्द्रेन्धनसंयुक्तः सन् तथित्वमग्निं प्रकटीकुर्वन् आर्द्रत्वेन प्रतिबन्धादग्निप्रकटनेऽसमर्थो धूममेव जनयति तथात्रापि बहिःसंवेदने सति सर्वथा तिरोधानस्फूर्तिरिति बहिःसंवेदनमेव आर्द्रत्वस्थानीयं, तस्मिन् सति विरहाग्निरपि गानरूपं धूममेव जनयति, एवं सत्यस्याग्नेर्धूमो गानरूपः शब्द एव, एवं सत्यर्धज्वलितदारुतुल्यता सिध्यति, अन्यथा एकदैव पूर्णतत्प्राकट्ये क्षणमात्रेण सर्वं भस्मसात् कुर्यादेव, यथा धूमः पूर्वमेकरूप एव भवति ततोनेकविधस्तथा गानमपि उत्तरोत्तरं विचित्रभावजननाद् विचित्रं भवतीत्युक्तं विराजत इति, अतोत्रेति यतो हेतोर्भगवान् रसात्मकस्तदात्मका एव च भावा अतो हेतोरखण्डाद्वैतभानादिदं स्वामिनीनां ज्ञानमुत्तममित्यर्थः,एतदेव स्फुटयन्ति धर्मिधर्माणामिति, एते भावाः स्थायिभावस्य व्यभिचारिभावा इति धर्मिणः श्रीकृष्णस्य

तद्धर्माणां "गतिसिते"तिश्लोकोक्तविहारादीनां च जीवतद्धर्मापेक्षया उत्कृष्टत्वात् "असा-वह"मिति स्वामिनीज्ञानमुत्तममित्यर्थः, अथ वा यथा प्रियवद् विहारादिस्तथैवेदं गानमपीत्याहुः यथा भगवत इत्यादि, कृत्रिमत्वादित्यादि "विचिक्युरुन्मत्तकव"-दित्यत्रोक्तं विचयनं हि बहिःसंवेदने सति भवति, तत्र हेतुमाहुः कृत्रिमत्वादिति, तत्र हेतुर्विचित्रभाववतीनां मिलनं, तदाहुः मिलिताश्च स्वतोन्यत इति, यतो हेतोर्मिलिता-स्ततो हेतोः स्वतोन्यतश्च विशेषविज्ञानात् तिरोभावस्फूर्तिरितियोजना, अत्र "यद्वे"-त्यादिना पक्षान्तरमुक्तं टिप्पण्याम् ॥४॥

१०-२७-१५ इत्युन्मत्तवचो गोप्य इत्यत्र भक्त्येति का० २७४३/४–२७६३/४। भक्त्यातिमत्ता इत्यादि याः भक्त्यातिमत्तास्तद्भावं "कृष्णोहं पश्यत गति"मिति-प्रकारेण भगवद्भावं प्राप्ताः, ईषन्मत्तास्तु "कस्याश्चित् पूतनायन्त्या" इत्यादिप्रकारेण पूतनादिभावं प्राप्ताः, तदुक्तं टिप्पण्यां "भगवन्मात्रज्ञानमतिमत्तत्वं तत्सम्बन्धिनामपि ज्ञानमीषन्मत्तत्व"मिति, लीलासम्बन्धिनां येषां ये भावास्तदात्मकतायां ते द्वेषादिभावा अपि स्वत एव भवन्तीतिज्ञापनायाहुः रोपत इति, भावेषु वैजात्यज्ञापनायोक्तं सत्वादि-गुणभावेनेति, यद्यप्यत्र लीला बहुविधास्तथापि नवसु श्लोकेषु एकैकस्मिन् श्लोके उक्ता एकैकविधा विवक्षिता इति नव लीला इत्युक्तं, अथ वा सर्वासां तुल्यत्वमेवेत्याशयेन पक्षा-न्तरमाहुः अतो न न्यूनभावोत्रेति,हि यस्माद्धेतोः शकटादिभिराविष्टा अतो न न्यून-तेत्यर्थः, तथा च भगवद्भाववत्याः पूतनादिभाववतीनां च तुल्यत्वमेवेत्यर्थः, पक्षान्तर-माहुर्भगवद्भावापन्नायाः सकाशात् पूतनोलूखलादिभावापन्ना उत्कृष्टा इतिज्ञापनाय सर्वत्र हरिबुद्ध्या वेति,कथञ्चिदपि चरणारविन्दस्पर्शेच्छया पूतनोलूखलादिभाव इत्यर्थः, तद्वदा-मयि चेच्चरणं न स्थापयति तदा पूतनोलूखलादिबुद्ध्यापि स्थापयिष्यतिभावेन तद्वदा-चरन्ति, अत्यार्त्यैव सर्वत्र भगवद्बुद्धिरतो भगवच्चरणारविन्दसम्बन्धस्य प्रकर्षेण सिद्ध्यर्थं पूतनादिभाव इत्यर्थः ॥१५॥

१०-२७-३५ यां गोपीमनयत् कृष्ण इत्यादिसार्धत्रयश्लोकवाक्यार्थानाहुः दोष इति का० २७७३/४। दोषदर्शन इति निमित्तसप्तमी, तथा च तस्यास्त्यागादिकं तासां स्वदोषस्फूर्तिनिमित्तं विज्ञेयमित्यर्थः, तस्यास्तादृगवस्थादर्शनेन तासां स्वदोषस्फूर्ति-रभूदसद्दोषेणैव वयं त्यक्ता इति, अत्रैव श्लोके स्वयमिति का० २७८१/४। ननु समानरस-त्वेप्येतासां तदा मानोभून्नैकस्यां भगवता नीतायां तत्राप्यधुना मानोभूत् तत्र को हेतुरित्याशङ्क्याहुः स्वगत्ययुक्तकरणादिति, अत्र टिप्पण्यां नायिकानां हि प्रकृतिः सदा मानिनीत्वं, प्रकृते च इयदवधि नायकाधीनत्वमेवाङ्गीकृतमिति स्वस्या नायिकाप्रकृतेर्या-गती रीतिस्तत्साम्ययुक्तकरणान्नायकाधीनत्वेन स्थितेर्नायिकाप्रवृत्तिनिवृत्तिहेतुत्वेनाधि-- ण्णि इवाधिकारिणो ये प्रकृत्यादय आदिपदात् प्रौढा भावास्ते पूर्वभावान् कोमलान्

१०-२७-० सप्तविंशाध्याये स्वानन्देति का० २६७½-२७०½। पूर्वाध्यायोक्तान्तर्धानतात्पर्यमाहुः स्वानन्दस्थापनार्थायेत्यादिसार्धेन, भगवता कामलीला स्वानन्दस्थापनार्थाय कृता, तत्र बाह्यो बाह्यप्रकारेण जनितः स आनन्दो यथान्तः पुष्टः सन् देहेन्द्रियादिषु निविशेत् तदर्थं लीलया सहितो भगवान् तास्वविशत् प्रविष्टवान्, चत्वारोत्र निरूप्यार्था इति 'चतुर्थोर्थो गुणगान'मितिविवृतं टिप्पण्यां, उक्तार्थत्रयनिरूपणे प्रकारविशेषमाहुः उद्देशत इत्यादि, आद्यैस्त्रिभिः श्लोकैस्त्रयाणामुद्देशः कृतः, आसक्तेर्लक्षणमन्वेषणं हरेः क्रिया भगवतो लीला, सा च "कस्याश्चित् पूतनायन्त्या" इत्यादिना लक्षणतो निरूपिता, गर्वाभावलक्षणं च "अनयाराधितो नून"मित्यनेनोक्तं सपत्नीभाग्याभिनन्दनं, अन्वेषणफलं च "व्यचक्षत वनोद्देशे पदानि परमात्मन" इत्यत्रोक्तं पददर्शनं, लीलावेशफलं च प्रियाधीनत्वदर्शनेपि प्रिये दोषारोपाभावपूर्वको "रेमे तया चात्मरत" इत्यादिनोक्तो भावः, गर्वाभावफलमितरविस्मृतिपूर्वकं तत्प्राप्त्यर्थैकप्रयत्नः, स च "ततोविशन् वनं चन्द्रज्योत्स्ना यावद् विभाव्यते" इत्यादिनोक्तः, गुणगानं तु विशेषतोग्रिमाध्याये उक्तं, अत्राध्यायेपि "पुनः पुलिनमाविश्ये"त्यनेन सामान्यत उक्तमिति कारिकायां चकारेण सूचितं, एवं आसक्तिहरिलीलागर्वाभावगुणगानात्मकाश्चत्वारोर्था अत्र तिरोधानलीलायां निरूप्या इत्युक्तं, लीलान्वेषणतत्परा इति लीलायामन्वेषणे च तत्परा इत्यर्थः, "रसमन्तर्गतं चक्रु"रिति बहिस्तिरोधानादित्यर्थः।

१०-२७-४ "गायन्त्य उच्चै"रित्यत्र शब्द इति का० २७१½-२७३½। एतदर्थष्टिप्पण्यां विस्तरेणोक्तः, तत एवात्र सङ्गृह्यते, ननु प्रभोरानन्दरूपत्वेन तद्भावेषु सत्सु सदानन्द एवोचितो न तु वक्ष्यमाणदुःखावस्थेत्याशङ्काभावाय तस्या अवस्थायाः स्वरूपमाहुः शब्दो हि धूमवदिति, एवं सति स्वरूपस्य रसात्मकत्वेन अत्रत्या भावाः सर्वे रसात्मका एवेति मन्तव्यं, भक्तानां भगवद्गुणगानात्मकः शब्दो हि अगरुप्रभृतिधूमवत् विनिर्गच्छन् सन् विराजते, तारतम्यं प्रतिक्षणं वैचित्र्यं च गच्छति, अत्र तापकत्वेन विरहोग्निरेव, अग्निर्यथार्द्रेन्धनसंयुक्तः सन् तन्निष्ठमग्निं प्रकटीकुर्वन् आर्द्रत्वेन प्रतिबन्धादग्निप्रकटनेऽसमर्थो धूममेव जनयति तथात्रापि बहिःसंवेदने सति सर्वथा तिरोधानस्फूर्तिरिति बहिःसंवेदनमेव आर्द्रत्वस्थानीयं, तस्मिन् सति विरहाग्निरपि गानरूपं धूममेव जनयति, एवं सत्यग्नेर्धूमो गानरूपः शब्द एव, एवं सत्यर्धज्वलितदारुतुल्यता सिध्यति, अन्यथा एकदैव पूर्णतत्प्राकट्ये क्षणमात्रेण सर्वं भस्मसात् कुर्यादेव, यथा धूमः पूर्वमेकरूप एव भवति ततोनेकविधस्तथा गानमपि उत्तरोत्तरं विचित्रभावजननाद् विचित्रं भवतीत्युक्तं विराजत इति, अतोत्रेति यतो हेतोर्भगवान् रसात्मकस्तदात्मका एव च भावा अतो हेतोरखण्डाद्वैतमानादिदं स्वामिनीनां ज्ञानमुक्तमित्यर्थः,एतदेव स्फुटयन्ति धर्मिधर्माणामिति, एते भावाः स्थायिभावस्य व्यभिचारिभावा इति धर्मिणः श्रीकृष्णस्य

द्‌धर्माणां "गतिस्मिते"तिश्लोकोक्तविहारादीनां च जीवतद्धर्मापेक्षया उत्कृष्टत्वात् "असा-
वह"मिति स्वामिनीज्ञानमुत्तममित्यर्थः, अथ वा यथा प्रियवद् विहारादिस्तथैवेदं
गानमपीत्याहुः यथा भगवत इत्यादि, कृत्रिमत्वादित्यादि "विचिक्युरुन्मत्तकव"-
दित्यत्रोक्तं विचयनं हि बहिःसंवेदने सति भवति, तत्र हेतुमाहुः कृत्रिमत्वादिति, तत्र
हेतुर्विचित्रभाववतीनां मिलनं, तदाहुः मिलिताश्च स्वतोन्यत इति, यतो हेतोर्मिलिता-
स्ततो हेतोः स्वतोन्यतश्च विशेषविज्ञानात् तिरोभावस्फूर्तिरितियोजना, अत्र "यद्व"-
त्यादिना पक्षान्तरमुक्तं टिप्पण्याम् ॥४॥
१०–२७–१५ इत्युन्मत्तवचो गोप्य इत्यत्र भक्त्येति का० २७४$\frac{३}{४}$–२७६$\frac{३}{४}$।
भक्त्यातिमत्ता इत्यादि याः भक्त्यातिमत्तास्तास्तद्भावं "कृष्णोहं पश्यत गति"मिति-
प्रकारेण भगवद्भावं प्राप्ताः, ईषन्मत्तास्तु "कस्याश्चित् पूतनायन्त्या" इत्यादिप्रकारेण
पूतनादिभावं प्राप्ताः, तदुक्तं टिप्पण्यां "भगवन्मात्रज्ञानमतिमत्तत्वं तत्सम्बन्धिनामपि
ज्ञानमीषन्मत्तत्व"मिति, लीलासम्बन्धिनां येषां ये भावास्तदात्मकतायां ते द्वेषादिभावा
अपि स्वत एव भवन्तीतिज्ञापनायाहुः रोषत इति, भावेषु वैजात्यज्ञापनायोक्तं सत्त्वादि-
गुणभावेनेति, यद्यप्यत्र लीला बहुविधास्तथापि नवसु श्लोकेषु एकैकस्मिन् श्लोके उक्ता
एकैकविधा विवक्षिता इति नव लीला इत्युक्तं, अथ वा सर्वासां तुल्यत्वमेवेत्याशयेन पक्षा-
न्तरमाहुः अतो न न्यूनभावोत्रेति,हि यस्माद्धेतोः शकटादिभिराविष्टा अतो न न्यून-
तेत्यर्थः, तथा च भगवद्भाववत्याः पूतनादिभाववतीनां च तुल्यत्वमेवेत्यर्थः, पक्षान्तर-
माहुर्भगवद्भावापन्नायाः सकाशात् पूतनोलूखलादिभावापन्ना उत्कृष्टा इतिज्ञापनाय सर्वत्र
हरिबुद्ध्या वेति,कथञ्चिदपि चरणारविन्दस्पर्शेच्छया पूतनोलूखलादिभाव इत्यर्थः,
मयि चेच्चरणं न स्थापयति तदा पूतनोलूखलादिबुद्ध्यापि स्थापयत्वितिभावेन तद्वदा-
चरन्ति, अत्यार्त्यैव सर्वत्र भगवद्बुद्धिरतो भगवच्चरणारविन्दसम्बन्धस्य प्रकर्षेण सिद्ध्यर्थं
पूतनादिभाव इत्यर्थः ॥१५॥ तां गोपीमनयत् कृष्ण इत्यादिमार्धत्रयश्लोकवाक्यार्थानाहुः
१०–२७–३५ दोषदर्शन इति निमित्तसप्तमी, तथा च तस्यास्त्यागादिकं
दोष इति का० २७७$\frac{३}{४}$। दोषदर्शन इति निमित्तसप्तमी, तथा च तस्यास्त्यागादिकं
तासां स्वदोषस्फूर्तिनिमित्तं विज्ञेयमित्यर्थः, तस्यास्तादृगवस्थादर्शनेन तासां स्वदोषस्फूर्ति-
रभूदस्मद्दोषेणैव वयं त्यक्ता इति, अत्रैव श्लोके स्वयमिति का० २७८$\frac{३}{४}$। ननु समानरम-
णेप्येतासां तदा मानोभून् नैकस्यां भगवता नीतायां तत्राप्यधुना मानोभूत् तत्र को
हेतुरित्याशङ्क्याहुः स्वगत्ययुक्तकरणादिति, अत्र टिप्पण्यां नायिकानां हि प्रकृतिः सदा
मानिनीत्वं, प्रकृते च इयदवधि नायकाधीनत्वमेवाङ्गीकृतमिति स्वस्या नायिकाप्रकृतेर्या-
गती रीतिस्तस्यामयुक्तकरणान् नायकाधीनत्वेन स्थितेर्नायिकाप्रवृत्तिनिवृत्तिहेतुत्वेनाधि-
कारिण इवाधिकारिणो ये प्रकृत्यादय आदिपदात् प्रौढा भावाम्ले पूर्वभावान् कोमलान्

नाशयामासुरित्यर्थः, तथा च पूर्वं भावानां कोमलत्वात् मानाभावेपि पश्चात् नायिकास्वभाववशात् कोमलभावरूपबुद्धिनाशे सापि नायिका अन्येवाभवत् मानवती जातेत्यर्थः, एवं चायं मानो नायिकायाः प्रकृतिसिद्ध एव न तु दोषात्मक इति भावः, स्वयं त्वयुक्तकरणादितिपाठे स्वपदं स्वामिनीपरं, शेषं पूर्ववत् ॥३५॥

अध्यायसमाप्तौ श्रीकृष्ण इति का० २७९३/४, २८०३/४। श्रीकृष्णगोपिकास्तत्र द्विविधा नवधा गुणैरिति अन्यपूर्वानन्यपूर्वाभेदेन द्विविधाः पुनः प्रत्येकं राजसादिभेदेन नवधेत्येवमष्टादशविधाः, उपलक्षणविधया एकोनविंशतितमा अपि ज्ञेयाः, पक्षान्तरमाहुः समुदायेन भिन्ना वेति, समुदायभेदेन भिन्नप्रकारा इत्यर्थः, पक्षद्वयमप्यग्रिमाध्यायकारिकासु स्वयमेव वदिष्यन्ति, स्वसन्देहात् तु मिलिता इति कस्या वा भाग्यात् स्नेहेन कृपया वा आगच्छेदितिसन्देहात् मिलिता जाता इत्यर्थः, तदुक्तं "पुनः पुलिनमागत्ये"तिश्लोकविवरणे सुबोधिन्याम् ॥

१०–२८–० अष्टाविंशाध्याये अष्टाविंशे हरेर्गानमिति का० २८९३/४–२९०३/४। अथ संक्षेपतो विभज्यन्ते द्विविधा गोप्यः, तत्रान्यपूर्वा दशविधाः, अनन्यपूर्वा नवविधाः, तथा हि "जयति त" इति सात्त्विकराजसी१, "शरदुदाशय" सात्त्विकतामसी२, "विषजलाप्ययात्" सात्त्विकसात्त्विकी ३, "न खलु गोपिकानन्दनो" निर्गुणा ४, "दिनपरिक्षये" इतिद्वादशे श्लोके राजसतामसी १२, "प्रणतकामदं" राजसराजसी १३, "सुरतवर्धनं" राजससात्त्विकी १४, "अटति यत्" सत्त्वमिश्रतामसी १५, पतिसुतान्वये"त्यत्र तामसतामसी १६, "रहसि संविदं" रजोमिश्रतामसी १७, अथ कुमारिकाः, "विरचिताभयं" सात्त्विकसात्त्विकी ५, "व्रजजनार्तिहन्" सात्त्विकतामसी ६, "प्रणतदेहिनां" सात्त्विकराजसी ७, "मधुरया गिरे"त्यत्र निर्गुणा ८, "तव कथामृतं" राजससात्त्विकी ९, "प्रहसितं" राजतामसी १०, "चलसि यद् व्रजात्" राजसराजसी ११, "व्रजवनौकसां" सत्त्वमिश्रतामसी १८, "यत्ते सुजात" रजोमिश्रतामसी १९, स्वभावादपराधत इति विप्रयोगावस्थायाः स्वभावादेव गानं चक्रुः, पक्षान्तरमाहुः अपराधत इति, स्वसिद्धाविषयज्ञानलक्षणोपराधः, कृता मानलक्षणावज्ञा याभिस्तादृश्यः स्तोत्रं चक्रुरित्यर्थः, राजसी तामसीत्यादि "जयति तेधिकं जन्मना व्रज"इतिश्लोके सात्त्विकराजसी, "शरदुदाशय" इत्यत्र सात्त्विकतामसी, "विषजलाप्यया"दित्यत्र सात्त्विकसात्त्विकी, "न खलु गोपिकानन्दन" इत्यत्र निर्गुणा, एवं चतुर्विधा गोप्यः पतिमत्योन्यपूर्वा निरूपिताः, तदनन्तरं सप्तविधा गोप्यः कुमारिकाः, ततः षड्विधाः पुनः सपूर्वाः, तत्र "दिनपरिक्षये" इतिद्वादशे श्लोके राजसतामसी, "प्रणतकामद"मित्यत्र राजसराजसी, "सुरतवर्धन"-मित्यत्र राजससात्त्विकी, "अटति यद् भवानह्नी"त्यत्र देवनिन्दकाः सात्त्विकतामस्यः, "पतिसुतान्वये"त्यत्र भगवन्निन्दकास्तामसतामस्यः, "रहसि संविद"मित्यत्र स्वनिन्दका

राजसतामस इत्याभासोक्तः क्रमः, कारिकोक्तक्रमानुसारेण तु देवनिन्दका राजसतामसः, आत्मनिन्दकाः सात्त्विकतामस इत्यायाति, तथा चोक्तं कारिकायां **राजसी तामसी चैव सात्त्विकीतिविभेदत** इति, तथा चात्र कारिकोक्तक्रमस्याविवक्षितत्वेन तात्पर्यान्तरेण वा कारिकोक्ताभासोक्तपक्षयोर्व्यवस्था ज्ञेया, एवं द्वादशादिसप्तदशान्तश्लोकोक्ताः षड्विधा आद्याश्चतस्रश्चेति दशविधा अन्यपूर्वाः, अथ कुमारिकाः, "विरचिताभय"मित्यत्र "सात्त्विकसात्त्विकी"त्युक्तमाभासे, कारिकायां तु "गुणातीता" इत्युक्तं, "गुणातीता" इत्यादिपदचतुष्टयं "द्वितीयाबहुवचनान्तमाहे"त्यनेन सम्बद्ध्यते, "व्रजजनार्तिह"न्नित्यत्र सात्त्विकतामसी, "प्रणतदेहिना"मित्यत्र सात्त्विकराजसी, "मधुरया गिरे"तिश्लोके निर्गुणेतिप्रतिभाति, पूर्वोक्तैस्त्रिभिः श्लोकैः सगुणानामुक्तत्वात्, "तव कथामृत"मित्यत्र राजससात्त्विकी, "प्रहसित"मित्यत्र राजसतामसी, "चलसि यद् व्रजा"दित्यत्र राजसराजसी, अथ "व्रजवनौकसा"मित्यष्टादशे श्लोके सत्त्वमिश्रतामसी, "यत्ते सुजाते"तिश्लोके रजोमिश्रतामसी, एवं पञ्चमादिसप्तश्लोकोक्ताः अन्तिमश्लोकद्वयोक्ताश्चेति नवविधाः कुमारिकाः, **तमसा तामसी** तत्रेति तत्र कुमारिकासु तामसतामसी नास्तीत्यर्थः, तथा चान्यपूर्वा दशविधाः नवविधाः कुमारिकाश्चेति एकोनविंशतिभेदाः,अयं कारिकोक्तः प्रथमपक्षः, गूढाभिसन्धिना पक्षान्तरमाहुः अथ चेति, अत्र टिप्पण्यां प्रार्थनाश्च ता आद्याश्चेतिविग्रहः, तथा च प्रथमद्वितीयतृतीयपञ्चमषष्ठसप्तमाष्टमश्लोकैः कृताः, अन्ते त्रयोदशचतुर्दशाभ्यां च कृता याः प्रार्थनास्ताः कुमारिकाभिः कृताः, अन्ये प्रौढाभिरुक्ताः श्लोकाः, नवमादयश्चत्वारः पञ्चदशादयः पञ्च चेत्यर्थः, चतुर्थ्यस्तु गुणातीतभावापन्नाः, कोमलभावा इतियावत्, "अतस्तथा श्लोकसङ्क्षे"तिविवृतं टिप्पण्यां, "न खलु गोपिकानन्दन" इति चतुर्थश्लोकोक्तास्तु कुमारिकासु प्रौढासु च समाः एतच्छ्लोकवक्त्र्यः कुमारिकान्यपूर्वोभयविधा अपीत्यर्थः, अस्मिन् द्वितीयपक्षे सात्त्विक्यादिविभागो दुरूहः, अत एवोक्तं टिप्पण्यां 'गूढाभिसन्धिना पक्षान्तरमाहु'रिति ।

१०-२८-२ शरदुदाशय इत्यत्र अन्तःस्थित इति का० २९१ ३/४ । पूर्णो नैव भवेदिति गानरूपेण वाग्निर्गमाभावे याद्यांशे पूर्णो रसो न भवेदितिहेतोर्गानरूपेण वाग्निर्गम इत्यर्थः ।

१०-२८-८ मधुरया गिरेत्यत्र हस्तेनेति का० २९२ ३/४,२९३ ३/४ । "विरचिताभय"मित्यादिश्लोकत्रयोक्तभगवत्कृतोपकारानुवादपूर्वकमेतच्छ्लोकोक्तमुपकारमाहुः हस्तेन चेत्यादि, "विरचिताभय"मितिश्लोके "शिरसि धेहि नः श्रीकरग्रह"मिति हस्तेनोपकारः, "व्रजजनार्तिह"न्नितिश्लोके "भज सखे भवत्किङ्करी"रितिस्वरूपेणोपकारः, "प्रणतदेहिना"मितिश्लोके "पदाम्बुजं कृणु कुचे"ष्विति पदा उपकारः,अस्मिन् "मधुरया गिरे"तिश्लोके मुखेन चोपकारः कर्तव्य इति ता गोप्यो जगुरित्यर्थः,मधुरवाणीप्रार्थनप्रयोजनमाहुः पूर्वोक्तमित्यादि,यावद्भगवान् मधुरवाण्या भाषणं न करोति तावत्पर्यन्तं पूर्वोक्तं सर्वमपि

सरसतां न याति, तूष्णीं रमणे रसो न भवतीतिरसमर्यादासूचनाय स्थितिरित्युक्तम्।

१०-२८-१७ रहसि संविदमित्यत्र वाक्यं हास्यमुरश्चैव कामानन्दाधिकारिण इति का० २९४½। "संवित्" वाक्यं तत् कामोद्बोधकं, हास्यमानन्दोद्बोधकं "श्रीधामे"तिविशेषणेन उरसा लीलाधिकारिण उच्यन्ते, अत्र कामपदमानन्दपदं च तत्तदुद्बोधकपरं ज्ञेयम् ॥१७॥

१०-२९-० एकोनत्रिंशाध्याये एकोनत्रिंशक इति का० २९५½-२९७½। "मिथो भजन्ती"त्यादिना निर्णयकथने हेतुमाहुः सन्तुष्ट इति।

१०-३०-० त्रिंशेऽध्याये त्रिंशत्तम इत्यादि का० २९८½-३०२¾। एतच्च टिप्पण्यां विस्तरे व्याख्यातमपि संक्षेपतो लिख्यते, लीलां चक्र इति लोके प्रकटामितिशेषः, तथा सति हरिः प्रीतः सन् कामकृतामपि लीलां लोके प्रकटां चक्रे इति हेतोर्गोप्यापि लीला त्रिंशत्तमेऽध्याये ईर्यत इतित्रावयार्थः, लीलोक्तिप्रस्तावे फलश्रुतिरसङ्गतेत्याशङ्क्य तत्तात्पर्यमाहुः अस्याः सर्वोपकारायेति, वैराग्यार्थिनां भक्तानां च सर्वेषामुपकाराय अस्या लीलायाः 'विक्रीडितं व्रजवधूभि'रित्यादिना फलश्रुतिरुदीर्यते, लोके कामकथा तदुद्बोधिका दृष्टेति तच्छङ्कया वैराग्यार्थी कदाचिन् न शृणुयात् तथा भक्त्यर्थ्यपि मातॄणां रहस्यवार्तां न शृणुयादिति सर्वेषां निःशङ्कश्रवणप्रवृत्तिसिद्धये फलश्रुतिरित्यर्थः, अन्ते प्रश्नोत्तरयोस्तात्पर्यमाहुः लौकिक्यपीति, यदा कस्यचिद् दृष्टिर्लौकिकी भगवति दोषारोपात्मिका भवति तदापि सिद्धान्त ईर्यते प्रश्नोत्तराभ्यां निर्णय उच्यते इत्यर्थः, भगवतो रसात्मकत्वेन स्वरूपात्मककामरसभोक्तरि भगवति दोषारोपवान् वस्तुतस्तूपेक्ष्य एव तथापि प्रश्नः सर्वोद्धारक इति तादृशस्याप्यलौकिकी बुद्धिर्यथा भवति तथावक्तव्यमितिप्रश्नतात्पर्यं, स च प्रश्नः "संस्थापनाय धर्मस्ये"त्यादिना राज्ञा कृतः, शुकस्तु 'तुष्यतु दुर्जन' इतिन्यायेन तन्मतमेवानुसृत्य "तेजीयसां न दोषाये"त्यादिना उत्तरं कृतवान्, अग्रे"गोपीनां तत्पतीनां चे"त्यादिना यदुत्तरं तत्तु वस्तुस्थितिमनुसृत्येतिभावः,नृत्यबन्धादेरुपयोगमाहुः रसात्मक इति, अतः शास्त्रं प्रवृत्तं हीति अतो रसात्मककामस्य गूढत्वात् तद्ज्ञापनार्थं भरतोक्तं वात्स्यायनोक्तं च शास्त्रं प्रवृत्तं, धर्मार्थकाममोक्षशास्त्रेषु तृतीयं कामशास्त्रं, अतोत्र भगवांश्चक्रे इति कामस्य गूढत्वात् तदुद्बोधार्थं स्वयं नृत्यं चक्रे स्वामिनीभिःकारितवांश्च, बन्धोपयोगमाहुः सर्वाङ्गेष्विति,जलानिलयोरुपयोगमाहुः जलं वायुश्च सामग्रीति, रमणं जलस्थलभेदेन द्विविधं,तत्राद्ये जलं सामग्री द्वितीयेऽनिलः, तयोः सामग्रीत्वे हेतुः स्वामिनीभगवतोः श्रमः, शीतत्वं जलानिलनिष्ठो हेतुरत्र सामग्रीत्वभवने, तथा च जलं वायुश्च रमणे श्रमशीतत्वाभ्यां सामग्री जायते इतियोजना, शीतादितिभावप्रधानो निर्देशः, "सोऽम्भस्यल"मितिश्लोकोक्ता जलक्रीडा, "ततश्च कृष्णोपवन" इति स्थलक्रीडा, एतल्लीलाया भूमौ प्राकट्यकरणे प्रयोजनमाहुः अत्रैव लोके

इति, प्रकटमिति क्रियाविशेषणं, तथा चास्मिन् लोके आधिदैविकं रूपं जीवानां प्रकटं यथा भवति तथा भुङ्क्ते इत्यर्थः, एतल्लीलाश्रवणे जीवानामाधिदैविकं रूपं प्रकटीभवतीति तथा, उत्तममिति क्षराक्षराभ्यामुत्तमं पुरुषोत्तमस्वरूपात्मकमित्यर्थः ।

१०-३०-१७ एवं शशाङ्कांशुविराजितेत्यत्र शास्त्राणां विषयस्तावद् यावन् मन्दरसा नराः । रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रम इति, एतद् वाक्यं वात्स्यायनीयसप्ताधिकरण्यां साम्प्रयोगिकाख्ये द्वितीयाधिकरणे द्वितीयाध्याय-समाप्तिस्थं, आरम्भतस्तु सप्तमाध्यायस्थम् ॥१७॥

१०-३१-० एकत्रिंशाध्याय एवमित्यादि का० ३०३$\frac{1}{2}$-३०६$\frac{1}{2}$। एवं रूपप्रपञ्चस्येत्यादि एवं पञ्चभिरध्यायैः रूपप्रपञ्चस्य पञ्चधा 'आत्मना प्रथमा लीले'त्या-दिप्रकारेण रसवर्णनं निरूप्य नामलीलातो गानात्मकशब्दलीलातो यो रसस्तदर्थमन्य-भजननिवृत्तिपूर्वकमिदं प्रकरणमुच्यते इत्यर्थः, एवमुद्धृत भक्ता इति इन्द्रभजननिवृत्ति-पूर्वकमुद्धृता इत्यर्थः, अत एव नन्दस्याम्बिकाद्यन्यदेवताभजनहेतुकः क्लेशो हरिणैव मोचनं च, पूर्ववदिति इन्द्रयागनिवृत्तिवदत्रापि अन्यभावाद् देवतान्तरभजनात् निवृत्तानां भक्तानां प्रमाणानन्दसिद्धये वेदात्मकप्रमाणरूपबलदेवसहितो रमणं चक्रे, ततो मर्यादामिश्रणात् प्राप्तं शङ्खचूडात्मकं दोषं सर्वथा नाशयामासेत्येकत्रिंश उच्यते इत्यर्थः, अत्र टिप्पण्यां मर्यादापुष्टिभेदेन नामलीलाया द्विविधत्वान् मर्यादामिश्रपुष्टिमार्गीयाः पूर्वा-ध्याये कथ्यन्ते शुद्धपुष्टिमार्गीया द्वितीये,मर्यादामार्गस्य सदोषत्वज्ञापनाय शङ्खचूडप्रसङ्ग इति।

१०-३२-० द्वात्रिंशाध्याये द्वात्रिंश इत्यादि का० ३०७$\frac{1}{2}$-३१०$\frac{1}{2}$। गोपिकानामन्तःकरणे स्वानन्दं पूरयामासेति अत्राध्याये ईर्यते,गुणगानेनेतिशेषः,स्वानन्द-पूरणमेव विवृण्वन्ति अन्तःप्रविष्ट इति,गुणगानेन मुखादुद्धृत्य गुणानुवादश्रवणेन पुनः कर्णयोः कर्णद्वारा सम्यक् यदा निवेद्यते तदेत्यर्थः, अत्र युग्मश्लोकैर्गाने हेतुमाहुः शब्दार्थयोर्मुख्यतात्रेति,अत्राध्याये नादात्मकस्य शब्दस्य तत्प्रतिपाद्यभगवत्स्वरूपा-त्मकस्यार्थस्य च मुख्यतेतिज्ञापनाय युग्माः श्लोका इत्यर्थः,पूर्वं वेणुगीते नादमात्रानुभवः, अत्रोभयोरनुभव इतिद्वाभ्यां कथनं, सङ्ख्यातात्पर्यमाहुः सर्वेषु चैव मासेष्विति, अत्र गुणगाने हि वर्षे वर्षे यावतीं लीलां प्रभुः करोति तावती सर्वा लीला क्रमेण स्वामिनी-भिर्गीता, न त्वेतदध्याये यावत्युक्ता तावन्मात्रेतिज्ञापनाय पूर्णवर्षस्य द्वादशमासात्मकत्वान् माससमानसङ्ख्याका युग्माः श्लोका उच्यन्त इत्याहुः अतोत्र मासयुग्मा हीति, मास-समानसङ्ख्याका युग्मा मासयुग्मा इति मध्यमपदलोपीसमासः,किञ्चोपक्रमोपसंहाराभ्यां चैकं युग्मं भवति,तेनाधिमासेपि यत् करोति तदपि स्वामिनीभिर्गीयत इतिज्ञाप्यत इत्याशये-नाहुः आद्यन्ते चापरं युग्ममिति,आदिश्चान्तश्चाद्यन्तौ तस्मिन्नाद्यन्त इतिविग्रहः, समा-

हारोत्र,तत्र प्रतिपाद्यं रूपमाहुः प्रक्रम इति,आद्यश्लोके गानोपक्रमः,अन्त्यश्लोके "तच्चितास्तन्मनस्का" इतिफलं, त्रयोदश भवन्ति तदिति अत्र तदित्यव्ययं तस्मादित्यर्थे

१०-३२-२ वामबाहुकृतेत्यस्याभासे सर्वोत्तमेत्यादि का० ३११$\frac{3}{4}$-३१७$\frac{1}{4}$

**सर्वोत्तमेति** वेणुनादपुरःसरा हरेर्लीला युगलश्लोकानां मध्ये सर्वत्र प्रथमेषु श्लोके निरूप्यते,कीदृशी लीलेत्याकाङ्क्षायामाहुर्वाच्येर्थे हेतुरिति, युगलद्वितीयश्लोकेषु वाच्ययोर्थः व्योमयानवनितामूर्छादिरूपस्तत्र हेतुभूतेत्यर्थः,पादपा लताश्चैकश्लोकोक्ता एकविधा ज्ञेयाः, देवरुयादयो देवगन्धर्वान्ता दशविधा वेणुवादरसज्ञा दशयुगलनिरूपिता उक्ताः अन्त्ययुग्मद्वये तु भगवानेव उक्त इत्याहुर्द्विधा च भगवान् हरिरिति, श्लोकद्वयोक्त इत्यर्थः, एते द्वादशविधा वेणुवादने रसज्ञा उत्तरेषु युग्मद्वितीयश्लोकेषु निरूप्यन्त इत्यर्थः, अन्त्ययुगलद्वयतात्पर्योक्तौ जानाति भगवानेव जानात्येव हरिः स्वयमिति यतो भगवानेवैतद्रसं जानात्यतः कारणादन्ते"उत्सवं श्रमरुचे"तिश्लोके"यदुपतिर्द्विरदराजविहार" इतिश्लोके च वारद्वयं भगवानेवोक्तः, अत्र जानाति भगवाने जानात्येव हरिः स्वयमिति वारद्वयोक्तिर्भगवतः श्लोकद्वयोक्तत्वबोधनाय, तत्र भगवत्त्वतापहारकत्वबोधनाय भगवत्पदहरिपदे,ततः पुंस्त्वति त्रिविधेष्विति शेषः,पादपपक्षमेघेष्वित्यर्थः, लतानां तरुमध्यपातित्वेन पुंस्स्वेव गणना कृता, त्रयोपि त्रिविधाः प्रोक्ता इति त्रयाणां त्रयाणां त्रयस्त्रयो भेदास्त्रिधा राजससात्त्विकतामसा इत्यर्थः, देवरुयादयस्त्रयं राजसाः, पादपलतादयः सात्त्विकाः, ब्रह्मगोपीमृगीभेदास्तामसा इति विवेचितं सुबोधिन्यां प्रकीर्णा इति उपदेवगणादय इत्यर्थः, अनुभावमाहुः सर्व एवेति, अत्र श्रीवल्लभगोस्वामिनः, पूर्वं दशाप्येते नादरसानभिज्ञाः पश्चात् नादश्रवणमात्रेण वस्तुनो यत् सामर्थ्यं मूर्छाद्युत्पादनं तत्संयुतास्तदाधारा जाताः, अयमनुभाव इत्यर्थः, अत्र हेत्वन्तराभावान्नादानुभाव एवायमिति हिशब्दः, पूर्वं द्वादशैते रसज्ञा इत्युक्तं, तत्र दश पूर्वं रसानभिज्ञास्ततो नादानुभावेन किञ्चिद्रसज्ञा जाताः, द्विविधो भगवांस्तु सर्वथा रसज्ञ इतिविभेदः।

इति श्रीतामसप्रकरणीयकारिकाव्याख्या।

## समाप्तोयं ग्रन्थः।

शोधपत्रम्।

| पत्रे | पङ्क्तौ | शुद्धम् | पत्रे | पङ्क्तौ | शुद्धम् |
|---|---|---|---|---|---|
| ९ | २९ | विषयाः | १६९ | १२ | तत् तु |
| ४९ | २८ | भगवत्का० | १७७ | १७ | पदम्बुजं |
| ७२ | २६ | ०श्चित्त० | १८१ | १३ | अङ्गीभू० |
| ११८ | ९ | पुरुषः | २०३ | २८ | तदिति |
| ११७ | २७ | ०हेतु० | | | |